8 cd स च देशो महाप्राज्ञ यस्मिन् वसति रावणः ।
9 ab अवगम्य तु वैदेहीं निलयं रावणस्य च ॥ १० ॥
9 cd प्राप्तकालं करिष्यामि सामर्थ्यं भवता सह ।
6 ab अत्र नाहं प्रभुः कार्ये वानरेन्द्र सलक्ष्मणः ॥ ११ ॥
6 cd त्वमस्य हेतुः कार्यस्य त्वयि चैतत् समाहितं ।
त्वमेवाज्ञापय विभो मम कार्यविनिश्चयं ॥ १२ ॥
7ab सुहृद्विनीतो विक्रान्तः प्राज्ञः कार्यविशेषवित् ।
7cd युक्तो यस्य भवानर्थे स कृतार्थो न संशयः ॥ १३ ॥
10ab एवमुक्तस्तु सुग्रीवो रामेण स्नेहसंयुतं ।
10cd विनतं नाम यूथेशं समाहूय वचोऽब्रवीत् ॥ १४ ॥
शैलाभं मेघनिर्घोषं सुग्रीवः प्लवगेश्वरः ।
विनयावनतं वीरं वानरं भीमविक्रमं ॥ १५ ॥
सोमसूर्यात्मजैः सार्द्धं वानरैर्वानरोत्तमैः ।
देशकालविधानज्ञैर्नयापनयकोविदैः ॥ १६ ॥
11 ab वृतः कोटीसहस्रेण वानराणां तरस्विनां ।
11 cd मृगयस्व दिशं पूर्वां सशैलवनकाननां ॥ १७ ॥
12ab तत्र सीतां च वैदेहीं निलयं रावणस्य च ।
12cd मार्गध्वं वनदुर्गेषु गुहासु च वनेषु च ॥ १८ ॥
13 ab यमुनामापगां दिव्यां यामुनं च महागिरिं ।
13 cd नदीं भागीरथीं चैव सरयूं कौशिकीमपि ॥ १९ ॥

14ab मेकलप्रभवं शोणं नदं मणिनिभोदकं ।
14cd रुचिरां कुटिलां चैव चन्दनीं चापगां तथा ॥२०॥
वेदवैनासिकां चैव रम्यां माहिषिकामपि ।
ततः शकपुलिन्दांश्च कलिङ्गांश्चैव मार्गत ॥२१॥
अन्विष्य दण्डकारण्यं सशैलवनकाननं ।
तत्र गोदावरीं पुण्यां प्रसन्नसलिलां नदीं ॥२२॥
तत्र पर्वतजालेषु कान्तारविषयेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥२३॥
15ab नदीं कालमसीं चैव तमसां च महानदीं ।
15cd गोमतीं गोकुलाकीर्णां तथा पूर्वां सरस्वतीं ॥२४॥
16ab सुम्भान् मान्यान् विदेहांश्च मलयान् काशिकोशलान् ।
16cd मागधान् दण्डकूलांश्च वङ्गानङ्गांस्तथैव च ॥२५॥॥
17ab महानादं च लौहित्यं शैलकाननशोभितं ।
17cd पत्तनं कोषकाराणां तिमिरं कनकाकरं ॥२६॥
17ef सर्वमेतद्विचेतव्यं सीतार्थे रावणस्य च ।
वानरैः सूर्यसंकाशैर्बुद्धिशौर्यसमन्वितैः ॥२७॥
18cd समुद्रमवगाढानि पत्तनानि गिरीनपि ।
19ab मन्दरस्य च ये कोटीः किराताः केचिदाश्रिताः ॥२८॥
19cd कर्णप्रावरणाश्चैव किराताश्चोग्रकर्णिकाः ।
घोराः कालमुखाश्चैव पारकाः कर्बुकास्तथा ॥२९॥

20ab अन्नया बलवन्तश्च पुरुषाः पुरुषादकाः ।
20cd किराताः स्थूलचूडाश्च हेमाभाः प्रियदर्शनाः ॥ ३० ॥
21ab आममत्स्याशनाश्चैव किराता द्वीपवासिनः ।
21cd अन्तर्जलचरा घोरा नरव्याघ्रा इति श्रुताः ॥ ३१ ॥
22ab एतेषामालयाः सर्वे विचेया वनगोचराः ।
22cd हरिभिर्ये च गम्यन्ते प्लवेन प्लवनेन च ॥ ३२ ॥
23ab रत्नवन्तं जलद्वीपं फलभोज्योपशोभितं ।
23cd सुवर्णरूप्यकं चैव गणाद्वीपं तथैव च ॥ ३३ ॥
24ab जम्बुद्वीपमतिक्रम्य शिशिरो नाम पर्वतः ।
24cd शृङ्गैर्नभःस्पृशैर्दिव्यैर्देवदानवसत्कृतैः ॥ ३४ ॥
25ab तस्य रम्येषु शृङ्गेषु गुहासूपवनेषु च ।
25cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३५ ॥
26ab ततः कालोदकं नाम समुद्रं भीमदर्शनं ।
26cd आक्रीडं दानवेन्द्राणां गता ह्यथ वानराः ॥ ३६ ॥
27ab तत्र रक्षोगणा घोराश्छायां गृह्णन्त्यलक्षिताः ।
27cd ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः ॥ ३७ ॥
28ab तं कालमेघप्रतिमं महोरगनिषेवितं ।
28cd अभिगम्य महानादं तथा नदनदीपतिं ॥ ३८ ॥
29ab ततो रक्तजलं घोरं लोहितं नाम सागरं ।
29cd गत्वा ह्यथ तां चैव वृहतीं कूटशाल्मलीं ॥ ३९ ॥

30ab गृहं च वैनतेयस्य नानारत्नविभूषितं ।
30cd शुभ्रं कैलाससंकाशं निर्मितं विश्वकर्मणा । ॥४०॥
31ab तेषु रम्येषु देशेषु विचेया जनकात्मजा ।
32ab ततः शृङ्गसहस्रेण भित्वा सलिलमुत्थितं ॥४१॥
32cd द्रक्ष्यथाम्बुरुहं दिव्यं गोशृङ्गं नाम पर्वतं ।
33ab तस्य शृङ्गसहस्रेषु मन्देहा नाम राक्षसाः ॥४२॥
33cd अरत्निमात्रा लक्ष्यन्ते नानारूपा भयावहाः ।
34ab ते पतन्ति जले घोराः सूर्यस्योदयनं प्रति ॥४३॥
34cd अभिशप्ता महेन्द्रेण निशायामुत्पतन्ति च ।
35ab ततः पाण्डरमेघाभं क्षीरोदं नाम सागरं ॥४४॥
35cd गता द्रक्ष्यथ दुर्धर्षं मुक्तामणिवरालयं ।
36ab तत्र मध्येऽंशुमान् नाम स्थितो रजतपर्वतः ॥४५॥
36cd दिव्यगन्धैः सुकुसुमै राजतैः पादपैर्वृतः ।
37ab तत्र सा राजतैः पद्मैर्नलिनी हेमकेशरैः ॥४६॥
37cd नाम्ना सुदर्शना नाम राजहंससमाकुला ।
38ab किन्नरा वानरा यक्षा गन्धर्वाप्सरसस्तथा ॥४७॥
38cd हृष्टास्तामभिगच्छन्ति नलिनीं चारुदर्शिनीं ।
39ab क्षीरोदं समतिक्रम्य ततो द्रक्ष्यथ वानराः ॥४८॥
39cd घृतोदमुदधिश्रेष्ठं सर्वभूतमनोहरं ।
40ab यत्र तत्क्रोधजं तेजः कृत्वा हयमुखं हरिः ॥४९॥

40cd हरिद्भूतं जलं नित्यमपिवद्वडवामुखः ।
41ab तत्र विक्रोशतां नादो भूतानां सलिलौकसां ॥५०॥
41cd श्रूयते भृशमार्त्तानां विशतां वडवामुखं ।
42ab घृतोदस्योत्तरे कूले योजनानि चतुर्दश ॥५१॥
42cd जातरूपशिलो नाम जातः कनकपर्वतः ।
43ab तस्यासीनं नगस्याग्रे द्रक्ष्यथ ज्वलितं श्रिया ॥५२॥
43cd सहस्रशिरसं देवमनन्तं पीतवाससं ।
44ab त्रिशिराः काञ्चनस्तालस्तस्य केतुर्महात्मनः ॥५३॥
44cd स्थापितः पर्वतस्याग्रे राजते चित्रवेदिकः ।
45ab पूर्वस्यां दिशि निर्माणं द्रक्ष्यथ ब्रह्मनिर्मितं ॥५४॥
45cd ततो हेममयः श्रीमानुदयो देवपर्वतः ।
46ab तस्य कोटिर्दिवं प्राप्ता शतयोजनमायता ॥५५॥
46cd जातरूपमयी दिव्या राजते च सवेदिका ।
47ab सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ॥५६॥
47cd जातरूपमयैः शृङ्गैः शोभते सूर्यसंनिभैः ।
तस्य पर्वतशृङ्गेषु वनेषु च गुहासु च ॥५७॥ ✓
54cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः । ✓
तमतिक्रम्य शैलेन्द्रं पुनर्द्रक्ष्यथ वानराः ॥५८॥ ✓
48ab दशयोजनविस्तारमुच्छ्रितं शतयोजनं ।
48cd नगं सौमनसं नाम जातरूपमयं दृढं ॥५९॥

तस्य पर्वतराजस्य महच्छृङ्गं मनोरमं ।
49ab तत्र वैखानसा नाम बालिखिल्या मरीचिपाः ॥ ६० ॥
49cd प्रादेशमात्रा दृश्यन्ते सूर्यवर्णास्तपोधनाः ।
50ab काञ्चनस्य च शैलस्य सूर्यस्येव महात्मनः ॥ ६१ ॥
50cd प्रमृष्टा तेजसा पूर्वा सन्ध्या रक्ता प्रकाशते ।
51ab तत्र पूर्वं पदं कृत्वा तदा विष्णुस्त्रिविक्रमः ॥ ६२ ॥
51cd द्वितीयं शिखरे मेरोश्चकार पुरुषोत्तमः ।
52ab उत्तरेण परिक्रम्य जम्बुद्वीपं दिवाकरः ॥ ६३ ॥
52cd दृश्यो भवति भूतानां शिखरं तमुपाश्रितः ।
53ab ततः संदर्शनद्वीपो गोभिरस्य प्रकाशते ॥ ६४ ॥
53cd ततस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि ।
आक्षिप्य सहसा सूर्यो द्योतते स्वेन तेजसा ॥ ६५ ॥
54ab शैलेष्वेतेषु दिव्येषु सागरेषु वनेषु च ।
55ab ये विभक्ता मया देशा विचेया तेषु जानकी ॥ ६६ ॥
ततः परमगम्या सा पूर्वा दिक् तिमिरावृता ।
रहिता चन्द्रसूर्याभ्यामदृश्या लोमहर्षिणी ॥ ६७ ॥
56ab एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ।
56cd अभास्करममर्यादं न जानामि ततः परं ॥ ६८ ॥
उदयं पर्वतं गत्वा आमासाद्विनिवर्तत ।
मासादूर्द्ध्वं न वस्तव्यं वसन् बध्यो भवेन्मम ॥ ६९ ॥

57cd सिद्धार्थाः संनिवर्तध्वमवगम्य तु मैथिलीं ।
एवं प्रतिसमादिष्टाः सुग्रीवेण महात्मना ॥ ७० ॥

महेन्द्रकान्तां वनशैलमण्डितां
60ab दिशं कपीन्द्रा निपुणं विचित्य ।
नरेन्द्रपत्नीमुपलभ्य मैथिलीं
60cd ततो निवृत्ताः सुखिनो भविष्यथ ॥ ७१ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे पूर्वदिक्प्रेषणं
नाम चत्वारिंशः सर्गः ॥

33 = XLI.

अथ प्रस्थाप्य स हरीन् दिशं पूर्वां हरीश्वरः ।
अपरान् प्रेषयामास वानरान् दक्षिणां दिशं ॥ १ ॥
अब्रवीद् गिरिसंकाशं हनूमन्तमुपस्थितं ।
पितामहसुतं चैव जाम्बवन्तं महाकपिं ॥ २ ॥
नीलमग्निसुतं चैव नलं चन्दनमेव च ।
शरार्चिषं सुहोत्रं च शरगुल्मं तथैव च ॥ ३ ॥
गयं गवाक्षं गवयं कुमुदमृषभं तथा ।
मैन्दं च द्विविदं चैव शरभं गन्धमादनं ॥ ४ ॥
दरीमुखं भीममुखं तारं च वनगोचरं ।
अङ्गदप्रमुखानेतान् हरीन् कपिगणेश्वरः ॥ ५ ॥
वेगविक्रमसंपन्नान् संदिदेश विशेषतः ।
तेषां दोषं गुणं चैव महद्बलमसङ्गतं ॥ ६ ॥
विमृश्य हरिवीराणामादिशद्दक्षिणां दिशं ।
वृतः शतसहस्रेण तारो यो हरिसत्तमः ॥ ७ ॥
एतैः सह महाभागैर्वानरैः कामरूपिभिः ।
अभियाति महाभागां विशालां दक्षिणां दिशं ॥ ८ ॥
ये केचन समुद्देशास्तस्यां दिशि सुदुर्गमाः ।
सुग्रीवः कपिमुख्यानामादिदेश च तान् हरीन् ॥ ९ ॥

10ab सहस्रशिखरं विन्ध्यं नानाद्रुमलतावृतं ।
10cd नर्मदां च नदीं दुर्गां विचिन्वन्तु वनौकसः ॥ १० ॥
12ab पर्वतप्रभवां दिव्यां तीक्ष्णस्रोतस्तरङ्गिणीं ।
12cd नानापक्षिरुतां रम्यां पुण्यां वेत्रवतीं नदीं ॥ ११ ॥
13ab तत्र पर्वतदेशेषु कुञ्जेषु विषमेषु च ।
13cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १२ ॥
तां च दिव्यां गिरिनदीं कृष्णवर्णां महानदीं ।
देविकां बाहुदां रम्यां पुण्यां बाहुमतीमपि ॥ १३ ॥
11ab मेकलानुत्कलांश्चेदीन् दशार्णान् कुकुरानपि ।
अन्तर्वेदींश्च विमलान् विचिन्वन्तु वनौकसः ॥ १४ ॥
ततो भोजांश्च पाण्ड्यांश्च विचित्य गिरिभिर्वृतान् ।
17ab गन्तव्यो मलयः श्रीमान् पर्वतो धातुमण्डितः ॥ १५ ॥
अम्बुशीतां वेगवतीं समृद्धानि पुराणि च ।
12ab विदर्भानृषिकांश्चैव रम्यां माहिषिकीमपि ॥ १६ ॥
14ab तथाश्मकान् पुलिन्दांश्च कलिङ्गांश्च विशेषतः ।
15ab अन्विष्य दण्डकारण्यं सनिर्झरनदीगुहं ॥ १७ ॥
15cd नदीं गोदावरीं चैव प्रसन्नाम्बुरुहां शिवां ।
16cd तथौड्रान् द्राविडान् पुण्ड्रान् चोलांश्चैव सकेरलान् ॥ १८ ॥
अयोमुखश्च गन्तव्यः पर्वतो धातुमण्डितः ।
17cd सुचित्रशिखरः श्रीमान् चित्रपुष्पितकाननः ॥ १९ ॥

18cd सचन्दनवनोद्देशो मार्गितव्यो महागिरिः ।
19ab ततस्तामापगां दिव्यां प्रसन्नसलिलां शिवां ॥ २० ॥
19cd गता द्रक्ष्यथ कावेरीं वृतामप्सरसां गणैः ।
20ab तत्रासीनं नगस्याग्रे मलयस्य महौजसः ॥ २१ ॥
20cd द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमं ।
22cd ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना ॥ २२ ॥
23ab तां महाग्राहजुष्टोदां तरिष्यथ महानदीं ।
23cd या चन्दनवनैर्दिव्यैः प्रच्छन्ना द्वीपशालिनी ॥ २३ ॥
24ab कान्तेव कृतसङ्केता समुद्रमभिधावति ।
24cd ततो हेममयं दिव्यं तोरणं मणिभूषितं ॥ २४ ॥
25ab कपाटगुप्तं पाण्ड्यानां गता द्रक्ष्यथ वानराः ।
25cd तामतिक्रम्य कावेरीमावृत्य मलयं गिरिं ॥ २५ ॥
26ab पौष्पीमिव कृतां मालां वेलां द्रक्ष्यथ वानराः ।
26cd मर्यादां तां समुद्रस्य वेलां गत्वा यशस्विनीं ॥ २६ ॥
सचन्दनवनां रम्यां विचिन्वन्तु वनौकसः ।
तत्र केतकषण्डेषु पुन्नागगहनेषु च ॥ २७ ॥
27ab रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।
27cd ततः समुद्रः संतार्योऽगाधः पुलिनमण्डितः ॥ २८ ॥
28ab अतरङ्गः स देशो हि कश्यपेन पुरा कृतः ।
28cd उपहारं भुवि न्यस्तं तरङ्गैराकुलीकृतं ॥ २९ ॥

29ab दृष्ट्वा भगवता शप्तो ह्यतरङ्गो भवेति सः ।
29cd ततः स वचनात् तस्य समुद्रः सरितां पतिः ॥ ३० ॥
30ab अतरङ्गोऽभवत् क्षिप्रं निर्मलादर्शदर्शनः ।
30cd ततो द्वीपः समुद्रस्य शतयोजनमायतः ॥ ३१ ॥
30ef तमतिक्रम्य शैलेन्द्रो महेन्द्र इति विश्रुतः ।
31ab जातरूपमयैः शृङ्गैरप्सरोगणसेवितः ॥ ३२ ॥
31cd सिद्धचारणसंघैश्च विनिकीर्णो मनोरमः ।
32cd यमुपैति सहस्राक्षः सदा पर्वणि पर्वणि ॥ ३३ ॥
तत्र यत्नश्च कर्तव्यो विचेया जनकात्मजा ।
पुनः समुद्रमागम्य दक्षिणं लवणालयं ॥ ३४ ॥
34ab द्वीपस्तस्य परे पारे शतयोजनमायतः ।
34cd अगम्यं मानुषैर्दिव्यं यमाकुर्वनगोचराः ॥ ३५ ॥
तत्र सर्वात्मना सीता मार्गितव्या विशेषतः ।
33ab स हि देवर्षिचरितः सिद्धचारणसेवितः ॥ ३६ ॥
यत्र देवैरबध्यस्य रावणस्य दुरात्मनः ।
राक्षसाधिपतेर्वासः श्रूयते वानरर्षभाः ॥ ३७ ॥
मध्ये चापि समुद्रस्य सिंहिका नाम राक्षसी ।
आषाढिकेति विख्याता छायाग्राही सुदारुणा ॥ ३८ ॥
35ab तमतिक्रम्य द्वीपं तु गिरिं द्रक्ष्यथ काञ्चनं ।
36ab उत्थितं सागरं भित्त्वा वयस्यं चन्द्रसूर्ययोः ॥ ३९ ॥

चन्द्रसूर्यांशुसंकाशं सागराम्बुसमावृतं ।
राजन्तमुच्छ्रितैः शृङ्गैर्विलिखन्तमिवाम्बरं ॥ ४० ॥
तस्यैकं काञ्चनं शृङ्गं सेवते यद्दिवाकरः ।
अपरं राजतं शृङ्गं सेवते यन्निशाकरः ॥ ४१ ॥
तं कृतघ्ना न पश्यन्ति न नृशंसा न नास्तिकाः ।
प्रणम्य शिरसा शैलं तं विचिन्वन्तु वानराः ॥ ४२ ॥
तमतिक्रम्य दुर्धर्षं गिरिमादित्यसंनिभं ।
परे पारे समुद्रस्य योजनानि चतुर्दश ॥ ४३ ॥
ततः सागरमुत्तीर्य विद्युद्वान् नाम पर्वतः ।
सर्वकामफलैर्वृक्षैर्निर्मितो विश्वकर्मणा ॥ ४४ ॥
तत्र भुक्त्वा वरान्नानि मूलानि च फलानि च ।
मधूनि पीत्वा मुख्यानि गम्यतां वानराः परं ॥ ४५ ॥
तमतिक्रम्य शैलेन्द्रं नानारत्नविभूषितं ।
उषीरवीजं दिव्यं च पर्वतं द्रष्टुमर्हथ ॥ ४६ ॥
जातरूपमयैर्वृक्षैः पुष्पितैः परिशोभितं ।
मर्तुकामा नराः पूर्वं तं पश्यन्ति महीधरं ॥ ४७ ॥
जातरूपमयांस्तांश्च विविधांस्तत्र पादपान् ।
उषीरवीजो यैर्जुष्टो यमस्योत्तरपर्वतः ॥ ४८ ॥
तस्य पर्वतशृङ्गेषु पुष्पितेषु वनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४९ ॥

45ab ततः शक्रध्वजाकारः कुञ्जरो नाम पर्वतः ।
45cd अगस्त्यभवनं तत्र निर्मितं विश्वकर्मणा ।।५०।।
49ab तत्र योजनविस्तारमुच्छ्रितं शतयोजनं ।
49cd तोरणं काञ्चनं दिव्यं नानारत्नविभूषितं ।।५१।।
50ab तत्र भोगवती नाम सर्पाणामालयः पुरी ।
50cd विशालरथ्या दुर्धर्षा तप्तकाञ्चनतोरणा ।।५२।।
51ab रक्षिता पन्नगैर्घोरैस्तीक्ष्णदंष्ट्रैर्महाविषैः ।
51cd सर्पराजो महातेजा यस्यां वसति वासुकिः ।।५३।।
तस्य चित्रेषु पार्श्वेषु वनेषु च सुगन्धिषु ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।।५४।।
46ab सरिद्व्यञ्जना नाम वहत्यस्मिंस्तडित्प्रभा ।
46cd अगस्त्यस्याभिषेकार्थं कुञ्जरे पर्वतोत्तमे ।।५५।।
47ab यत्र मूलौषधिर्नाम सहेमरजताकरः ।
47cd कुञ्जरं पर्वतं गत्वा महर्षिर्यत्र संस्थितः ।।५६।।
48ab रक्तचन्दनपङ्काढ्यां मणिविद्रुमशर्करां ।
48cd देवर्षिचरितां दिव्यां सावित्रीं तां सरस्वतीं ।।५७।।
53ab ततस्तां समतिक्रम्य महावृषभसंस्थितिः ।
53cd सर्वरत्नमयः श्रीमान् वृषभो नाम पर्वतः ।।५८।।
54ab गोशीर्षं चन्दनं यत्र पद्मकञ्जाग्निसंनिभं ।
54cd दिव्यमुत्पद्यते यत्र तच्चैवाग्निशिखोपमं ।।५९।।

55ab न च तच्चन्दनं दिव्यं स्प्रष्टव्यं हि कथञ्चन ।
55cd रोहिता नाम गन्धर्वा घोरा रक्षन्ति तद्वनं ॥ ६० ॥
56ab तेषां गन्धर्वपतयश्च द्वारः सूर्यवर्चसः ।
56cd शैलूषो ग्रामणीः सिन्धुः स्थानो बभ्रुश्च वीर्यवान् ॥ ६१ ॥
तृणाङ्कोराश्रमं तत्र महर्षेः पुण्यकर्मणः ।
गता द्रक्ष्यन्ति हरयः स्वर्गो यत्र गतः स्वयं ॥ ६२ ॥
तमाश्रममतिक्रम्य तृणाङ्कोः पर्वतोऽपरः ।
58ab यत्र सौमनसा नाम शृङ्गात् प्रभवते नदी ॥ ६३ ॥
58cd तस्य सानुषु रम्येषु चन्दनागुरुगन्धिषु ।
59ab शिलातलविनिष्पिष्टैः क्रीडतीव महोर्मिभिः ॥ ६४ ॥
59cd तस्याः पुलिनशालिन्यास्तीरं रम्यं मनोहरं ।
60ab उत्तरं प्लवगश्रेष्ठा दक्षिणं न तु दृश्यते ॥ ६५ ॥
62cd ततः परमनाधृष्यः पितृलोकः सुदारुणः ।
63ab विपुलां राजधानीं तामतिक्रम्य तमो महत् ॥ ६६ ॥
63cd वैवस्वतस्य राज्ञो हि तत्र पारिप्लवप्रभः ।
64ab प्रासादः काञ्चनैः स्तम्भैर्वज्रवैदूर्यवेदिकः ॥ ६७ ॥
64cd नानावृक्षलतागुल्मैः सर्वतः परिशोभितः ।
65ab यत्र वैवस्वतो राजा धर्मासनगतः प्रभुः ॥ ६८ ॥
65cd व्यभजत् सर्वभूतानामुभे सुकृतदुष्कृते । —
67ab तृणाङ्कोराश्रमं गत्वा महर्षेः पुण्यकर्मणः ॥ ६९ ॥

अन्तं पृथिव्या दुर्धर्षं न गन्तव्यं ततः परं ।
एतावदेव युष्माभिः शूरैः प्लवगपुङ्गवैः ॥ ७० ॥
शक्यं गन्तुं विचेतुं च दक्षिणां वै दिशं प्रति ।
अभास्करममर्यादं न जानामि ततः परं ॥ ७१ ॥
तृणाङ्कोराश्रमं गत्वा तां च विज्ञाय मैथिलीं ।
ततः शीघ्रं निवर्तध्वं कृतकार्या वनौकसः ॥ ७२ ॥
यो मां निवृत्तो युष्माकं दृष्टा सीतेति वक्ष्यति ।
स मे तुल्यफलो राज्ये मानार्हश्च भविष्यति ॥ ७३ ॥
निखिलेन विचेतव्यं यथोद्दिष्टं वनौकसः ।
यच्चान्यदपि नोद्दिष्टं तत्रापि क्रियतां मतिः ॥ ७४ ॥
शैलेष्वेतेषु दुर्गेषु निर्झरेषु गुहासु च ।
वनेषु च विचित्रेषु पत्तनेषु महत्सु च ॥ ७५ ॥
अन्वेष्या महिषी सीता राघवस्य महात्मनः ।
अधिगम्य च वैदेहीं निलयं रावणस्य च ॥ ७६ ॥
गतिं विदित्वा वैदेह्याः संनिवर्तितुमर्हथ ।
मासादूर्द्ध्वं न वस्तव्यं वसन् बध्यो भवेन्मम ॥ ७७ ॥
यथोक्तं चैव कर्तव्यमेवं स्यां प्रीतिमानहं ।
अन्यथा संशयो वः स्याद्दाराणां जीवितस्य च ॥ ७८ ॥
अमितबलपराक्रमा भवन्तो गुणविपुलेषु कुलेषु संप्रसूताः ।
मनुजपतिसुतां द्रुतं लभध्वं तदतिगुणं पुरुषार्थमाचरध्वं ॥ ७९ ॥

34 = XLII.

2ab विशेषेण तु सुग्रीवो हनूमन्तमुवाच ह ।
2cd स हि तस्मिन् हरिश्रेष्ठे संभावयति विक्रमं ॥ १ ॥
3ab न भूमावन्तरीक्षे वा पाताले वा सुरालये ।
3cd अप्सु वा गतिभङ्गं ते पश्यामि हरिपुङ्गव ॥ २ ॥
4ab ससुराः सहगन्धर्वाः सनागाः सहदानवाः ।
4cd विदिता वीर लोकास्ते ससागरधराधराः ॥ ३ ॥
5ab गतिर्वेगश्च तेजश्च लाघवश्च महाकपे ।
5cd पितुस्ते सदृशं वीर मारुतस्य महात्मनः ॥ ४ ॥
6ab तेजसा चापि ते भूतं न समं विद्यते भुवि ।
6cd तद्यथा दृश्यते सीता तथा त्वं कर्तुमर्हसि ॥ ५ ॥
7ab त्वय्येव हनूमन् सर्वं बलं तेजः पराक्रमः ।
7cd देशकालानुवृत्तिश्च नयश्चानयवर्जितः ॥ ६ ॥
स तं कार्यसमासङ्गमवसज्य हनूमति ।
कृतार्थ इव संवृत्तः प्रहृष्टेन्द्रियमानसः ॥ ७ ॥
8ab ततः कार्यसमाधानमवसक्तं हनूमति ।
8cd विदित्वा स महाबुद्धिश्चिन्तयामास राघवः ॥ ८ ॥
9ab सर्वथा निश्चितार्थोऽयं हनूमति कपीश्वरः ।
9cd निश्चितानुभवश्चापि हनूमान् कार्यसाधने ॥ ९ ॥

10ab तदेवं प्रहितस्यास्य परिज्ञातस्य कर्मभिः ।
10cd भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः ॥ १० ॥
11ab स समीक्ष्य महातेजा व्यवसायोत्तरं कपिं ।
11cd करिष्यति ध्रुवं कार्यमयमित्यन्ववैक्षत ॥ ११ ॥
12ab ददौ चास्य तदा प्रीतः स्वनामाङ्काभिचिह्नितं ।
12cd अङ्गुरीयमभिज्ञानं राजपुत्र्याः परंतपः ॥ १२ ॥
13ab अस्य सा हरिशार्दूल दर्शनाज्जनकात्मजा ।
13cd मंस्यते मन्नियुक्तं त्वां न चोद्वेगं करिष्यति ॥ १३ ॥
14ab व्यवसायो हि ते वीर कर्म चैव प्रकाशितं ।
14cd सुग्रीवस्य च संदेशः सिद्धिं कथयतीव मे ॥ १४ ॥
15ab स तं गृहीत्वा हनूमान् कृत्वा मूर्ध्नि कृताञ्जलिः ।
15cd पादौ प्रणम्य रामस्य सुग्रीवस्य च मारुतिः ।
15ef सहायैः सहितो व्योम पुप्लुवे वानरर्षभः ॥ १५ ॥

स हर्षयंस्तद्बलिनां महद्बलं
16ab वनौकसां वायुसुतो बभौ तदा ।
गताम्बुदे व्योम्नि विशुद्धमण्डलः
16cd शशीव नक्षत्रगणैः समावृतः ॥ १६ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे दक्षिणादिग्निर्देशो
नाम एकचत्वारिंशः सर्गः — अङ्गुरीयप्रदानं
नाम द्विचत्वारिंशः सर्गः ॥

35 = XLIII.

1ab ततः प्रस्थाप्य सुग्रीवो हनूमत्प्रमुखान् हरीन् ।
1cd बुद्धिविक्रमसंपन्नान् वायुवेगसमान् जवे ॥ १ ॥
2ab अथाहूय महातेजाः सुषेणं नाम यूथपं ।
2cd तारायाः पितरं राजा श्वशुरं भीमविक्रमं ॥ २ ॥
3ab अब्रवीत् प्राञ्जलिर्वाक्यमभिपूज्य प्रणम्य च ।
4ab साहाय्यं कुरु रामस्य कृत्येऽस्मिन् समुपस्थिते ॥ ३ ॥
4cd वृतः शतसहस्रेण वानराणां तरस्विनां ।
5ab अभिगच्छ दिशं सौम्य पश्चिमां वारुणीं प्रभो ॥ ४ ॥
6ab सुराष्ट्रान् सहवाह्लीकान् भद्राभीरांस्तथैव च ।
स्फीतान् जनपदांश्चैव विशालानि पुराणि च ॥ ५ ॥
प्रभासादीनि तीर्थानि तथा द्वारवतीमपि ।
8cd तत्र केतकषण्डेषु तथा तालीवनेषु च ॥ ६ ॥
9ab हरयो विहरिष्यन्ति नारिकेलवनेषु च ।
7cd पुन्नागवृक्षबहुलं वकुलोद्दालकाकुलं ॥ ७ ॥
12cd मरीचिपत्तनं चैव रम्यं च जटिलस्थलं ।
सुवीरमङ्गलोकं च तथा कोलूकमेव च ॥ ८ ॥
क्रमशस्तानि सर्वाणि विचेतव्यानि वानरैः ।
रत्नवन्ति विशालानि पत्तनानि समन्ततः ॥ ९ ॥
7ab प्रत्यक्स्रोतोविशालाश्च नद्यः शीतजलाः शिवाः ।

तापसानामरण्यानि गिरीणां कन्दराणि च ॥ १० ॥
कैकेयान् सिन्धुसौवीरान् कान्तारगिरयश्च ये ।
गिरिजालावृतां दुर्गां मार्गध्वं पश्चिमां दिशं ॥ ११ ॥
ततः पश्चिममागम्य समुद्रं द्रष्टुमर्हथ ।
द्वीपांश्च बहुशस्तत्र बहुपादपशोभितान् ॥ १२ ॥
आनर्त्तांश्चैव मार्गध्वं कान्ताराण्यटवीस्तथा ।
सिन्धुसागरयोश्चैव संगमे पर्वतो महान् ॥ १३ ॥
स वै फेनगिरिर्नाम शतशृङ्गो बहुद्रुमः ।
तस्य प्रस्थेषु रम्येषु सिंहा क्रीडन्ति सर्वशः ॥ १४ ॥
हृष्टाश्च मत्तमातङ्गास्तोयदस्वननिस्वनाः ।
यत्र पक्षङ्गमाः सिंहा बलिनो बिलवासिनः ॥ १५ ॥
नाप्यासादयितव्याश्च पुरा दत्तवरा हि ते ।
तिमिमत्स्यान् गजांश्चैव नीडानारोपयन्ति ते ॥ १६ ॥
सरस्तत्र सुविस्तीर्णं नलिनी च मनोरमा ।
तानि नीडानि सिंहानां गिरेः शृङ्गशतं च तत् ॥ १७ ॥
सर्वमाशु विचेतव्यं हरिभिः कामरूपिभिः ।
सिन्धोरेव च तीर्थानि विचेतव्यानि यत्नतः ॥ १८ ॥
मरूंश्चानुमरूंश्चैव शूराभीरालयाश्च ये ।
गिरयश्च विचेतव्या वनान्युपवनानि च ॥ १९ ॥
स्त्रीणां शोकावहं स्थानं दत्तमिन्द्रेण रुष्यता ।

21cd पुराणि यवनानां च विचिन्वन्तु वनौकसः ॥२०॥
आलोक्य पह्लवावासं यच्च तेषां समीपतः ।
22ab ततः पञ्चनदं कृत्स्नं विचेतव्यं समन्ततः ॥२१॥
23ab काश्मीरमण्डलं चैव शमीपीलुवनानि च ।
23cd पुराणि च सशैलानि विचिन्वन्तु वनौकसः ॥२२॥
24ab ततस्तक्षशिलां रम्यां शलाकां पुष्करावतीं ।
अपरानपि शाल्वादीन् मणिमन्तं च पर्वतं ॥२३॥
25ab तथा गान्धारदेशश्च मरुभूमिश्च सर्वशः ।
25cd विचेयं रमणीयं च कैकेयानां निवेशनं ॥२४॥
गिरिजालावृतां दुर्गां मार्गित्वा पश्चिमां दिशं ।
अच्छिद्रेण विचेतव्या देशाः सगिरिकन्दराः ॥२५॥
27ab ततः पश्चिममासाद्य समुद्रं भीमदर्शनं ।
27cd मार्गध्वं वानरास्तत्र भीमं सागरमुत्तमं ॥२६॥
28ab ततः शृङ्गं दिवि स्तब्धं काञ्चनं भीमपादपं ।
28cd दुर्धर्षं पारिपात्रस्य गता द्रक्ष्यथ वानराः ॥२७॥
29ab चतस्रो विंशतिश्चैव गन्धर्वाणां महात्मनां ।
29cd कोट्यस्तत्रार्कवर्णानां वसन्ति क्रूरकर्मणां ॥२८॥
30ab दूरतो वर्जनीयास्ते वानरैर्भीमविक्रमैः ।
30cd न ग्राह्यं फलमूलं च तस्मिन् देशे प्लवङ्गमैः ॥२९॥
31ab दुराधर्षा हि ते वीराः सत्ववन्तो विशेषतः ।

31cd रक्षन्ति फलमूलानि गन्धर्वा भीमविक्रमाः ॥ ३० ॥
32ab तत्र प्रयत्नः कर्तव्यो मार्गितव्या च मैथिली ।
32cd न हि वोऽस्ति भयं तेभ्यः कार्येषु मम वर्ततां ॥ ३१ ॥
33ab अवगाढः समुद्रस्य चक्रवान् नाम पर्वतः ।
33cd सर्वरत्नमयैः शृङ्गैर्नैकतालसमुच्छ्रयैः ॥ ३२ ॥
34ab तत्र चक्रं महासारं वज्रनाभमयोमयं ।
34cd सुरारिमथनं दिव्यं वराहेण निवेशितं ॥ ३३ ॥
36ab तत्र पञ्चजनं हत्वा हयग्रीवं च दानवं ।
36cd आजहार पुरा शङ्खं चक्रं च मधुसूदनः ॥ ३४ ॥
40ab तत्र सानुषु रम्येषु विशालासु गुहासु च ।
40cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३५ ॥
37ab योजनानां चतुःषष्टिं वराहो नाम पर्वतः ।
37cd सुवर्णशृङ्गः स श्रीमानगाधश्च महोदधिः ॥ ३६ ॥
41ab तमतिक्रम्य शैलेन्द्रं काञ्चनैर्धातुभिर्वृतं ।
42cd शिखराद्यस्य धाराणां सहस्रं संप्रवर्तते ॥ ३७ ॥
37ab ततो मेघमिवोद्यन्तं वज्राशनिसमस्वनं ।
41cd हन्यन्ति कपयः शैलमुल्लिखन्तमिवाम्बरं ॥ ३८ ॥
43ab द्विरदाश्च मयूराश्च सिंहा व्याघ्राश्च यत्र वै ।
43cd अभिगर्जन्ति शतशो धाराशब्दैः कृतोद्यमाः ॥ ३९ ॥
45ab तस्मिन् हरिहयः श्रीमान् महेन्द्रः पाकशासनः ।

45cd अभिषिक्तः सुरैः पूर्वं सुमेघे रत्नपर्वते ॥४०॥
47ab तमतिक्रम्य शैलेन्द्रं महेन्द्रपरिपालितं ।
47cd षष्टिं गिरिसहस्राणि काञ्चनानि गमिष्यथ ॥४१॥
48ab तरुणादित्यवर्णानि भ्राजमानानि सर्वतः ।
48cd जातरूपमयैः शृङ्गैः पुष्पितैः शोभनानि च ॥४२॥
50ab तेषां मध्ये स्थितो राजा मेरुः कनकपर्वतः ।
50cd आदित्येन प्रसन्नेन शैलो दत्तवरः पुरा ॥४३॥
यादृशी मे प्रभा शैल तादृशी ते भविष्यति ।
51ab प्रभावान्मम शैलेन्द्र सर्वे भावाश्चराचराः ॥४४॥
51cd तवाश्रया भविष्यन्ति दिवारात्रौ च काञ्चनाः ।
52ab त्वयि ये च निवत्स्यन्ति देवगन्धर्वदानवाः ॥४५॥
52cd ते भविष्यन्ति मुक्ताभा रत्नाभाः काञ्चनप्रभाः ।
53ab आदित्या मरुतो रुद्रा वसवश्चाश्विनावपि ॥४६॥
53cd आगम्य पश्चिमां सन्ध्यां मेरोरुत्तरमूर्द्धनि ।
54ab आदित्यमुपतिष्ठन्ते तैश्च सूर्योऽभिपूजितः ॥४७॥
54cd अदृश्यः सर्वभूतानामस्तं गच्छति पर्वतं ।
55ab योजनानां सहस्राणि दश याति दिवाकरः ॥४८॥
55cd निमेषान्तरमात्रेण गच्छत्यस्तं शिलोच्चयं ।
58ab अगम्यो हि ततो मेरुर्यत्र स द्युतिमानृषिः ॥४९॥
58cd प्रभासयति तं देशं द्वितीय इव भास्करः ।

59ab प्रष्टव्यः स च सावर्णिर्महर्षिः सूर्यसंनिभः ॥५०॥
59cd प्रणम्य शिरसा भूमौ प्रवृत्तिं मैथिलीं प्रति ।
60ab अन्तरा मेरुमस्तं च भानोर्दशशिरा महान् ॥५१॥
60cd स्थापितः पर्वतस्याग्रे विभ्राजति सवेदिकः ।
61ab तत्र पर्वतशृङ्गेषु कन्दरेषु गुहासु च ॥५२॥
61cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।
62ab अत्र चैवापरं शैलं लोहितार्कसमप्रभं ॥५३॥
62cd अस्तमालोकयिष्यन्ति कपयः कामरूपिणः ।
63ab स तु शैलो न गन्तव्यो वानरैर्वानरर्षभाः ॥५४॥
63cd स हि वैश्वानराज्जातस्तेजसा घर्मदः सदा ।
64ab न तं सिंहा न शार्दूला न मृगा न च पक्षिणः ॥५५॥
64cd अभिगच्छन्ति शैलेन्द्रं न देवा न च पन्नगाः ।
65ab तस्य शृङ्गे महद्दिव्यं भवनं सूर्यसंनिभं ॥५६॥
65cd प्रासादशतसंबाधं निर्मितं विश्वकर्मणा ।
66ab शोभितं पद्मिनीभिश्च काञ्चनैश्च महाद्रुमैः ॥५७॥
66cd निलयः पाशहस्तस्य वरुणस्य महात्मनः ।
68ab एतावज्जीवलोकस्य भास्करो रजनाक्षये ॥५८॥
68cd कृत्वा वितिमिरं भाभिरस्तं गच्छति पर्वतं ।
67ab प्रतीच्यां दिशि निर्माणं कृतं देवैः पुरा महत् ॥५९॥
67cd जातरूपमयः श्रीमान् सोमार्चिर्नाम वानरः ।

.69ab एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ॥ ६० ॥
69cd अभास्करममर्यादं न जानामि ततः परं ।
76ab अधिगम्य च वैदेहीं निलयं रावणस्य च ॥ ६१ ॥
76cd अस्तं पर्वतमासाद्य पूर्णे मासे निवर्तथ ।
78ab मासादूर्द्ध्वं न वस्तव्यं वसन् बध्यो भवेन्मम ॥ ६२ ॥
.77ab अगम्यं हि परं तत्र देवैरपि सवासवैः ।
इत्यर्थमेव श्वशुरः पितृभूतो विसर्जितः ॥ ६३ ॥
70cd कृत्स्नास्वापत्सु भवतां समर्थः परिपालने ।
71ab श्रोतव्यं सर्वमेतस्य यथैव मम वानराः ॥ ६४ ॥
71cd योऽन्यथा स्थास्यति कपिः स मे बध्यो भविष्यति ।
75ab अतोऽन्यदपि यत् किञ्चित् कार्यमस्मद्धितं भवेत् ॥ ६५ ॥
तत् सुषेणमतं कार्यं देशकालोपपादितं ।
73ab एतच्छ्रुत्वा मया प्रोक्तं भवन्तः पश्चिमां दिशं ॥ ६६ ॥
73cd सर्वतः परिमार्गन्तां यथा दृश्येत जानकी ।
74ab रामपत्न्यां तु दृष्टायां मैथिल्यां सर्वथा वयं ।
74cd ऋणान्मुक्ता भविष्यामः कृतप्रत्युपकारिणः ॥ ६७ ॥
79ab भवान् गुरुर्मे श्वशुरो यथा पिता न मे सुहृत् त्वत्सदृशोऽस्ति कश्चन ।
79cd कृतेन कार्येण भवन्तमागतं यथाशु पश्यामि तथा विधीयतां ॥ ६८ ॥
80ab ततः सुषेणप्रमुखाः प्लवङ्गमाः कपीन्द्रवाक्यं निपुणं निशम्य तत् ।
80cd दिशं विचेतुं वरुणाभिपालितामभिप्रयाताः समुदीर्णमानसाः ॥ ६९ ॥

## 36 = XLIV.

1ab ततः प्रस्थाप्य सुग्रीवः सुषेणं पश्चिमां दिशं ।
2ab वीरं शतबलिं नाम वानरं वानरर्षभः ॥ १ ॥
2cd उवाच राजा राजानं सर्ववानरसंमतं ।
3ab शूरं रामहितं वाक्यमहितं रावणस्य च ॥ २ ॥
3cd वृतः शतसहस्रेण वानराणां तरस्विनां ।
4ab वैवस्वतसुतैः सार्द्धं मृगयस्वोत्तरां दिशं ॥ ३ ॥
4cd यक्षराक्षसगन्धर्वकिन्नरेशेन धीमता ।
5ab पालितामेकपिङ्गेन धनदेन महात्मना ॥ ४ ॥
6cd विदेहतनयां तत्र पत्नीं रामस्य धीमतः ।
7ab विचिन्वन्तु भवन्तस्तां दुर्धर्षैर्वानरैः सह ॥ ५ ॥
8ab दिशमेतां सुविचितां कर्तुमर्हथ वानराः ।
8cd विदेहराजदुहितुः कृते संत्यक्तजीविताः ॥ ६ ॥
9ab अस्मिन् कार्येऽथ निर्वृत्ते कृते दाशरथिप्रिये ।
9cd ऋणान्मुक्ता भविष्यामः कृतप्रत्युपकारिणः ॥ ७ ॥
10ab कृतं हि प्रियमस्माकं राघवेण महात्मना ।
10cd तस्य प्रतिकृते हि स्यात् सफलं जीवितं मम ॥ ८ ॥
11ab एतां बुद्धिं पुरस्कृत्य दृश्यते जानकी यथा ।
11cd तथा भवद्भिः कर्तव्यमस्मत्प्रियहितैषिभिः ॥ ९ ॥

12ab अयं हि सर्वभूतानां संमान्यो हरिसत्तमाः ।
12cd अस्मासु च गतो भक्तिं परां परपुरंजयः ॥ १० ॥
13ab इमानि शैलशृङ्गाणि नदीः शैलान्तराणि च ।
13cd भवन्तः परिमार्गन्तु बुद्धिविक्रमसंपदः ॥ ११ ॥
14ab तत्र मत्स्यान् पुलिन्दांश्च शूरसेनांस्तथैव च ।
14cd प्रचरान् भद्रकांश्चैव कुरूंश्च सह मद्रकैः ॥ १२ ॥
15ab गान्धारान् यवनांश्चैव शकानोड्रान् सपारदान् ।
15cd वाह्लीकानृषिकांश्चैव पौरवानथ किङ्करान् ॥ १३ ॥
16ab चीनानपरचीनांश्च तुखारान् वर्वरानपि ।
16cd काञ्चनैः कमलैश्चैव काम्बोजानपि संवृतान् ॥ १४ ।
17ab एतानत्यद्भुतान् देशान् सपर्वतनदीवनान् ।
17cd अन्विष्य दरदांश्चैव हिमवन्तं गमिष्यथ ॥ १५ ॥
18ab लोध्रपद्मकषण्डैश्च देवदारुवनैस्तथा ।
18cd सालैस्तालैस्तमालैश्च भूर्जैश्च बकुभिर्वृतं ॥ १६ ॥
19ab किन्नरैश्चोरगैः सिद्धैः पिशाचैर्यक्षराक्षसैः ।
19cd अनुकीर्णं स्थितं शैलमावृत्य दिशमुत्तरां ॥ १७ ॥
20ab पन्नगैर्मृगयूथैश्च नानापक्षिगणैरपि ।
20cd अनुकीर्णं वनं सर्वं वानरैश्च सहस्रशः ॥ १८ ॥
21ab तस्य पर्वतजालेषु नदीषु च गुहासु च ।
21cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १९ ॥

22 ab किरातांष्टङ्कणान् भद्रान् पशुपालांश्च दारुणान् ।
22 cd अन्विष्याथ भृगोस्तुङ्गं गमिष्यथ महाश्रमं ॥ २० ॥
23 ab ततो महाश्रमं गत्वा देवगन्धर्वसेवितं ।
23 cd कालं नाम सदा शान्तं गमिष्यथ शिलोच्चयं ॥ २१ ॥
24 ab तस्य पर्वतदुर्गेषु वनेषु च गुहासु च ।
24 cd अन्वेष्यः सह वैदेह्या रावणो राक्षसाधिपः ॥ २२ ॥
25 ab ताम्राकरमतिक्रम्य हेमगर्भं महागिरिं ।
25 cd ततः सुदर्शनं नाम गमिष्यथ शिलोच्चयं ॥ २३ ॥
26 ab तस्य काननषण्डेषु प्रियङ्गुगहनेषु च ।
26 cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २४ ॥
27 ab तमतिक्रम्य शैलेन्द्रं सर्वतः शतयोजनं ।
27 cd अपर्वतनदीवृक्षं सर्वसत्त्वविवर्जितं ॥ २५ ॥
28 cd संतप्तमेव तं नित्यं सवित्रा तिग्मरश्मिभिः ।
29 cd त्वरमाणैः कृताहारैः पीततोयैश्च वानरैः ॥ २६ ॥
30 ab तं तु शीघ्रमतिक्रम्य कान्तारं लोमहर्षणं ।
30 cd पाण्डरं द्रक्ष्यथ ततः कैलासं नाम पर्वतं ॥ २७ ॥
31 ab तत्र पाण्डुरमेघाभं जाम्बुनदपरिष्कृतं ।
31 cd कुबेरभवनं दिव्यं निर्मितं विश्वकर्मणा ॥ २८ ॥
32 ab विशाला नलिनी तत्र प्रभूतकमलोत्पला ।
32 cd हंसकारण्डवाकीर्णा मुक्तावैदूर्यबालुका ॥ २९ ॥

33 ab तत्र वैश्रवणो राजा सर्वलोकनमस्कृतः ।
33 cd धनदो रमते नित्यं गुह्यकैः सह यक्षराट् ॥ ३० ॥
34 ab तस्य सर्वनिकायेषु निर्झरेषु गुहासु च ।
34 cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३१ ॥
45 ab क्रौञ्चं पर्वतमासाद्य गिरेस्तस्य वनं महत् ।
45 cd दुष्प्रवेशं दुराधर्षं सिद्धचारणसेवितं ॥ ३२ ॥
46 ab वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः ।
46 cd देवैरभ्यर्चिताः शश्वद्देवरूपा महर्षयः ॥ ३३ ॥
47 ab क्रौञ्चस्य च गुहा दिव्याः सानूनि शिखराणि च ।
47 cd निर्झराश्च नितम्बाश्च विचेतव्यास्ततस्ततः ॥ ३४ ॥
48 ab क्रौञ्चस्य शिखरस्थं च तद्वृदत्यथ सरो महत् ।
48 cd अवृक्षकमशैलं च मानसं विहगालयं ॥ ३५ ॥
49 ab न गतिस्तत्र देवानां न भूतानां न रक्षसां ।
49 cd तस्मादालोकनीयं तदप्रमत्तैः प्लवङ्गमैः ॥ ३६ ॥
क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः ।
मयस्य भवनं तत्र दानवस्य स्वयं कृतं ॥ ३७ ॥
56 ab मैनाकस्तु विचेतव्यः ससानुप्रस्थकन्दरः ।
56 cd स्त्रीणामश्वमुखीनां च निकेतास्तत्र शोभनाः ॥ ३८ ॥
57 ab तत्राश्रमपदं रम्यमृषीणामूर्ध्वरेतसां ।
57 cd दीप्तं सप्तर्षिचरितं धर्मैककृतनिश्चयैः ॥ ३९ ॥

58ab तमाश्रममतिक्रम्य शैलो बहुफलोदकः ।
58cd सिद्धा वैखानसास्तत्र वालिखिल्याश्च तापसाः ॥४०॥
59ab वन्द्या देवोपमाः सर्वे तपसा नीरजस्तमाः ।
59cd प्रष्टव्यास्ते च सीतायाः प्रवृत्तिममितौजसः ॥४१॥
60ab हेमपुष्करसंछन्नं तत्र वैखानसं सरः ।
60cd तरुणादित्यसंकाशं खगैर्वारिचरैर्वृतं ॥४२॥
61ab औपवाह्यः कुबेरस्य सार्वभौम इति श्रुतः ।
61cd गजः पर्येति तं देशं सदा सह करेणुभिः ॥४३॥
62ab तत् सरः समतिक्रम्य नष्टचन्द्रदिवाकरं ।
62cd अनक्षत्रगणं व्योमनिर्माणं घनगर्जितं ॥४४॥
63ab गभस्तिभिरिवार्कस्य स देशः संप्रकाशते ।
63cd शाम्यद्भिस्तापसैस्तत्र द्योतितः स्वेन तेजसा ॥४५॥
35ab तं तु देशमतिक्रम्य त्रिशृङ्गो नाम पर्वतः । ✓
35cd तस्य पादे सरो दिव्यं महत् काञ्चनपुष्करं ॥४६॥
36ab ततः प्रच्यवते दिव्या तीक्ष्णश्रोतास्तरङ्गिणी ।
36cd नदी नैकग्रहाकीर्णा कुटिला लोकभाविनी ॥४७॥
37ab तस्यैकं काञ्चनं शृङ्गं पर्वतस्याग्निसंनिभं ।
37cd वैदूर्यमयमेकं च शैलस्यास्य समुच्छ्रितं ॥४८॥
38ab अनुत्पन्नेषु भूतेषु बभूव किल भूमितः ।
38cd अग्रजः सर्वभूतानां विश्वकर्मेति विश्रुतः ॥४९॥

39ab तत् तस्य किल पौराणमग्निहोत्रं महात्मनः ।
39cd आसीत् त्रिशिखरः शैलः प्रवृत्तास्तत्र येऽग्नयः ॥५०॥
40ab तत्र सर्वाणि भूतानि सर्वमेधे महामखे ।
40cd कृत्वाभवन्महातेजाः सर्वलोकमहेश्वरः ॥५१॥
41ab रुद्रस्य किल संस्थानं सरो वै सार्वमेधिकं ।
41cd ततः प्रवृत्ता सरयूर्घोरनक्रवती नदी ॥५२॥
42ab देवगन्धर्वपतगाः पिशाचोरगदानवाः ।
42cd प्रविशन्ति न तं देशं प्रदीप्तमिव पावकं ॥५३॥
44ab तमतिक्रम्य शैलेन्द्रं महादेवाभिपालितं ।
50cd योजनानि चतुःषष्टिं पर्वतो गन्धमादनः ॥५४॥
51ab तालीशैश्च तमालैश्च सरलैश्चोपशोभितः ।
52cd शैलः पुष्पाचितः श्रीमानासीदुरगभूषितः ॥५५॥
53ab शृङ्गे तस्य स्थिता जम्बुर्नाम्ना दिव्या सुदर्शना ।
53cd जातरूपमयी दिव्या विराजति सवेदिका ॥५६॥
54ab जम्बुद्वीपस्य सा जम्बुर्ध्वजो वानरपुङ्गवाः ।
54cd अर्चिता चोपगीता च नित्यमप्सरसां गणैः ॥५७॥
43ab तत्र पर्वतशृङ्गेषु समीपेषु वनेषु च ।
43cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥५८॥
50ab तं तु देशमतिक्रम्य सिद्धचारणसेवितं ।
64ab cd तुषारचयसंकाशं मन्दरं द्रक्ष्यथाचिरात् ॥५९॥

65ab शृङ्गे तस्य ह्रदो दिव्यः प्रसन्नसलिलप्रभः ।
66ab विश्रुतो घृतमण्डोदः पितामहनिषेवितः ॥ ६० ॥
66cd तस्मिन् वसति सा दिव्या रम्या त्रिपथगामिनी ।
67ab आकाशगङ्गा दुर्धर्षा पूरयन्ती नभस्तलं ॥ ६१ ॥
67cd सा धारा पाण्डरा दिव्या सलिलस्य दिवश्च्युता ।
68ab तस्मिन् पतति दुर्धर्षे महानादे महाह्रदे ॥ ६२ ॥
ततः प्रहरते गङ्गा गिरिकाननसंचयान् ।
प्रवहन्ती महावेगा शिलाश्च समनःशिलाः ॥ ६३ ॥
सा गङ्गा सा चतुर्भागा सा चाप्यतिबला शुभा ।
68cd तामिन्द्रमार्गां दुर्धर्षां कथयन्ति मनीषिणः ॥ ६४ ॥
69ab शतद्रुः कौशिकी पुण्या सा च वैतरणी नदी ।
69cd लोहितोदा वसापङ्का मेदमांसास्थिसंकुला ॥ ६५ ॥
70ab तत्र यक्षाः सगन्धर्वाः पिशाचोरगराक्षसाः ।
70cd विमुञ्चन्त्यवशा देहं कालस्य वशमागताः ॥ ६६ ॥
71ab तस्मिंस्तेषां शरीराणि दृश्यन्ते न महीतले ।
71cd यथा मृतानां दृश्यन्ते मनुष्याणां प्लवङ्गमाः ॥ ६७ ॥
72ab तमतिक्रम्य शैलेन्द्रं मन्दरं मुनिसेवितं ।
72cd उत्तरं रत्नसंपूर्णं समुद्रं गन्तुमर्हथ ॥ ६८ ॥
तं कालमेघप्रतिमं महानादं भयावहं ।
उत्तरं तीरमासाद्य न विश्वसितुमर्हथ ॥ ६९ ॥

73ab तीरे तस्य समुद्रस्य सहस्रशिखरो महान् ।
73cd काञ्चनः सूर्यसंकाशो बहुकेतुरिति श्रुतः ॥ ७० ॥
74ab तस्योपरि शुचिर्दिव्यः प्रसन्नसलिलो ह्रदः ।
74cd महच्छरवणं तत्र काञ्चनं समवाप्स्यथ ॥ ७१ ॥
75ab तस्मिन् शरवणे दिव्ये नित्यं तपति पावकः ।
75cd जातो यत्र महासेनः कार्त्तिकेयः प्रतापवान् ॥ ७२ ॥
76ab आवर्त्तकलिलो यस्य समीपे सलिलोदधिः ।
76cd उन्मज्जति महाघोरं यस्मिन् हयशिरो महत् ॥ ७३ ॥
77ab तस्य पर्वतदुर्गेषु निर्झरेषु गुहासु च ।
77cd सिद्धचारणजुष्टेषु पुष्पितेषु वनेषु च ॥ ७४ ॥
78ab आश्रमेषु च रम्येषु लतानां गहनेषु च ।
78cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ७५ ॥
79ab तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा ।
79cd उभयोस्तीरयोर्यस्याः कीचका नाम वेणवः ॥ ७६ ॥
80cd सा न शक्या तरीतुं हि नदी परमदुर्गमा ।
81ab तस्याः स्पृष्ट्वैव सलिलं नरः शैलोऽभिजायते ॥ ७७ ॥
81cd तेऽपि तीरगतास्तस्या नद्याः कीचकवेणवः
82ab समागच्छन्त्ययत्नेन संगमं च परस्परं ॥ ७८ ॥
80ab ते नयन्ति परं पारं सिद्धान् प्रत्यानयन्ति च ।
83ab आपगां दूरपारां ते संतरन्ति हि वेणुभिः ॥ ७९ ॥

84ab ततः शीतां नदीं शुभां दृष्ट्वाथाद्भुतगोचरां ।
84cd तस्यां स्नात्वाशु शुचयो निश्चिताः पुण्यकर्मणः ॥ ८० ॥
कुरून् यातोत्तरान् शीघ्रं शक्रलोकसमान् गुणैः ।
नदी नीला महाघोरा सर्वभूतापहारिणी ॥ ८१ ॥
तामुत्तीर्य प्रयत्नेन निपुणं प्रविचिन्त्य च ।
85cd तान् गच्छत हरिश्रेष्ठा विशालानुत्तरान् कुरून् ॥ ८२ ॥
86ab दानशीलान् महाभागान् नित्यतुष्टान् गतज्वरान् ।
86cd न तत्र शीतमुष्णं वा न जरा नामयस्तथा ॥ ८३ ॥
87ab न शोको न भयं वापि न वर्षं नापि भास्करः ।
88cd सर्वकामफलैर्वृक्षैः पुष्पितैरुपशोभिता ॥ ८४ ॥
89ab शोभिता काञ्चनैश्चैव विशालै रत्नपर्वतैः ।
87cd भूमिः सुषिक्ता पाण्डुश्च समा निस्तृणकण्टका ॥ ८५ ॥
88ab नीरजस्का सुगन्धा च क्वचिच्च मृदुशाद्वला ।
तत्र काञ्चनपद्माश्च नद्यः काञ्चनवालुकाः ॥ ८६ ॥
तत्र हेमद्रुमच्छन्ना विगाढा हेमपर्वतैः ।
89cd तप्तकाञ्चनपद्माश्च नलिन्यस्तत्र साण्डजाः ॥ ८७ ॥
रम्याणि तापनीयानि वनान्युपवनानि च ।
91ab हेमकिञ्जल्कवर्णानि सुगन्धीनि क्वचित् क्वचित् ॥ ८८ ॥
90ab नीलवैदूर्यतोयाश्च वाप्यस्तत्र समन्ततः ।
90cd रक्तोत्पलवनैश्चान्यैर्मणिदण्डैर्हिरण्मयैः ॥ ८९ ॥

91cd शोभितास्तत्र गन्धाढ्या नलिन्यः फुल्लपङ्कजाः ।
92ab महार्हैर्मणिपत्रैश्च काञ्चनप्रभकेशरैः ॥ १० ॥
92cd नीलोत्पलवनैर्दिव्यैः स देशः सर्वतो वृतः ।
96ab निर्मलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः ॥ ११ ॥
96cd उद्भूतनलिनास्तत्र निम्नगा विमलोदकाः ।
95ab सुवर्णगिरयस्तत्र मणिरत्नशिलोच्चयाः ॥ १२ ॥
95cd सर्वरत्नमया भान्ति पादपैरुपशोभिताः ।
98ab नित्यपुष्पफलाश्चान्ये नगाः पत्ररथाकुलाः ॥ १३ ॥
99cd दिव्यगन्धाः सुखस्पर्शाः सर्वकामान् फलन्ति वै ।
100ab सप्तर्षिभवनं तत्र तत्र मन्दाकिनी नदी ॥ १४ ॥
100cd देवर्षिभवनं रम्यं तत्र चैत्ररथं वनं ।
101ab तत्र क्षीरवहा नद्यो ह्रदाः पायसकर्दमाः ॥ १५ ॥
101cd ब्रह्मणा विहितास्तत्र पादपाश्च मधुच्युताः ।
जातरूपमयाश्चैव हुताशनसमप्रभाः ॥ १६ ॥
98cd नानावर्णानि वासांसि फलन्त्यन्ये नगोत्तमाः ।
स्त्रीणां यान्यनुरूपाणि पुरुषाणां तथैव च ॥ १७ ॥
मनःसंकल्परूपाणि रत्नगर्भाणि च द्रुमाः ।
भूषणानि विचित्राणि जातरूपमयानि च ॥ १८ ॥
शयनानि प्रसूयन्ते चित्रास्तरणवन्ति च ।
विचित्रान् गन्धसंयोगान् सर्वगन्धानुगांस्तथा ॥ १९ ॥

सर्वर्तुकालसंसाध्यान् फलन्त्यन्ये नगोत्तमाः ।
103ab पानानि च महार्हाणि भक्ष्याणि विविधानि च ॥ १०० ॥
विचित्राणि प्रभूतानि फलन्ति धरणीरुहाः ।
103cd स्त्रियश्च गुणसंपन्ना रूपयौवनदर्पिताः ॥ १०१ ॥
104ab गन्धर्वाः किन्नराः सिद्धा नागा विद्याधरास्तथा ।
104cd रमन्ते सहितास्तत्र ताभिर्भास्करसंनिभाः ॥ १०२ ॥
106ab तत्र पादपशाखाग्रेष्ववसक्ताः सहस्रशः ।
106cd कान्तिमत्यः शुभा नार्यः सर्वाभरणभूषिताः ॥ १०३ ॥
107ab पुरुषाश्चोत्तमौदार्या रूपवन्तो महौजसः ।
107cd निस्तन्द्रीक्षुद्भयत्रासा मधुरप्रियवादिनः ॥ १०४ ॥
108ab सर्वे सुकृतकर्माणः सर्वे रतिपरायणाः ।
108cd सिद्धकामाः समृद्धार्था वसन्ति सहयोषितः ॥ १०५ ॥
109ab गीतवादित्रनिर्घोषाः सोत्कृष्टहसितस्वनाः ।
110ab अपर्वतीया वृक्षाढ्या गुहाः पन्नगसेविताः ॥ १०६ ॥
113ab तत्रानुपमकल्याण्यो रूपजल्पितचेष्टितैः ।
113cd स्त्रियः पुरुषलोभिन्यः कमलाननलोचनाः ॥ १०७ ॥
114ab सर्वाभरणसंपन्नाः सर्वा मधुरनिस्वनाः ।
सदा पुरुषनिर्मुक्ताः परस्परकथाप्रियाः ॥ १०८ ॥
111ab अह्ना तु तासां सर्वासां यौवनं व्यतिवर्तते ।
111cd जाताः सूर्योदये जीर्णा भवन्ति रजनीक्षये ॥ १०९ ॥

पूर्वमप्सरसो दिव्यास्ताः किलोत्तमतेजसः ।
114cd अचिन्तयित्वा देवेशं तत्र क्रीडन्ति नित्यशः ॥ ११० ॥
115ab तस्य देशस्य रम्यत्वादिन्द्रोपस्थानविस्मृताः ।
115cd शशाप किल ताः सर्वा महेन्द्रः पाकशासनः ॥ १११ ॥
116ab जरामरणदुःखार्त्ताः कल्यं कल्यमतन्द्रिताः ।
116cd सर्वा भवत दुर्मेधास्तस्मिन्नेव गुहामुखे ॥ ११२ ॥
117ab इति शापपराभूताः शक्रस्यैवाज्ञया हि ताः ।
117cd अशून्यां कुर्वते नित्यं गुहां तां तिमिरावृतां ॥ ११३ ॥
112ab अभिशापान्महेन्द्रस्य ताः किलाप्सरसस्तथा ।
112cd अहन्यहनि जायन्ते म्रियन्ते च पुनः पुनः ॥ ११४ ॥
118ab गुहायां तु तमोवत्यां गुहाः सन्ति सहस्रशः ।
118cd पार्श्वे स्थूला महाभीमाः शैलाश्चैव गृहाणि च ॥ ११५ ॥
119ab सीता तत्र विचेतव्या यत्नमास्थाय दारुणं ।
वानरैस्त्रिदशप्रख्यैर्बुद्धिशौर्यसमन्वितैः ॥ ११६ ॥
119cd कुरूंस्तान् समतिक्रम्य उत्तरे पयसां निधिः ।
121cd तत्र सोमगिरिर्नाम हिरण्मयसमो महान् ॥ ११७ ॥
122ab इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये ।
122cd सर्वे ते समवेक्षन्त गिरिराजं दिवं गताः ॥ ११८ ॥
123ab असूर्योऽपि हि देशः स तस्य भासः प्रकाशते ।
123cd ससूर्य इव लक्ष्मीवांस्तपतीव दिवाकरे ॥ ११९ ॥

124ab भगवांस्तत्र भूतात्मा स्वयम्भूर्बहुधात्मकः ।
124cd ब्रह्मा भवति वश्यात्मा सर्वात्मा सर्वभावनः ॥ १२० ॥
126cd न कथञ्चन गन्तव्यं कुरूणामुत्तरेण च ।
127ab अन्येषामपि भूतानां न तत्र क्रमते गतिः ॥ १२१ ॥
127cd स हि सोमगिरिर्नाम देवानामपि दुर्गमः ।
128ab तमालोक्य ततः शीघ्रमुपावर्तितुमर्हथ ॥ १२२ ॥
तस्य शैलस्य पार्श्वेषु नोपरिष्टात् कथञ्चन ।
132cd कान्तारेषु च शून्येषु निर्झरेषु गुहासु च ॥ १२३ ॥
129ab उद्यानेषु च रम्येषु गन्धर्वभवनेषु च ।
129cd रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १२४ ॥
131ab अवगम्य तु वैदेहीं निलयं रावणस्य च ।
133cd मासादूर्द्ध्वं न वस्तव्यं वसन् बध्यो भवेन्मम ॥ १२५ ॥
134ab एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ।
134cd अभास्करममर्यादं न जानामि ततः परं ॥ १२६ ॥
132ab सर्वमेतदशेषेण मार्गितव्यं प्रयत्नतः ।
132ef यदन्यदपि नोद्दिष्टं तत्रापि क्रियतां मतिः ॥ १२७ ॥

ततः कृतं दाशरथेर्महत् प्रियं
135ab महत्तरं चापि ततो मम प्रियं ।
कृतं भविष्यत्यनलानिलोपमा
135cd विदेहजादर्शनजेन कर्मणा ॥ १२८ ॥

ततः कृतार्थाः सहिताः सबान्धवा
136ab मयार्चिताः सर्वगुणैर्मनोरमैः ।
यथेप्सितं शीघ्रमथ प्लवङ्गमाः
136cd सहप्रिया भूतधरां चरिष्यथ ॥१२९॥

इत्येवमुक्ता हरयोऽथ शीघ्रं
137ab रामं ससुग्रीवमनन्तवीर्यं ।
शिरोभिरुर्व्यां सहिताः प्रणम्य
138cd जग्मुर्दिशं वैश्रवणाभिगुप्तां ॥१३०॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे पश्चिमदिग्निर्देशो नाम त्रिचत्वारिंशः सर्गः——उत्तरदिग्निर्देशो नाम चतुश्चत्वारिंशः सर्गः ॥

37 = XLV.

तदुग्रशासनं भर्तुर्विज्ञाय हरिपुङ्गवाः ।
शलभा इव संछाद्य पृथिवीं संप्रतस्थिरे ॥ १ ॥
पूर्वां तु दिशमास्थाय विनतः प्लवगैः सह ।
प्रतस्थे कपिशार्दूलो वानरैर्बहुभिर्वृतः ॥ २ ॥
ताराङ्गदाभ्यां सहितः प्लवगः पवनात्मजः ।
अगस्त्यचरितामाशां प्रतस्थे प्लवगैः सह ॥ ३ ॥
सुषेणः कपिशार्दूलो हृष्टो वरुणपालितां ।
प्रतस्थे विक्रमोपेतैः सुदुर्गां प्लवगैः सह ॥ ४ ॥
उत्तरां तु दिशं दुर्गां गिरिराजसमावृतां ।
वीरः शतबलिर्नाम ययौ बहुबलानुगः ॥ ५ ॥
सागरान् पर्वतानूपान् सरितः पत्तनानि च ।
सर्वाणि कपयो जग्मुर्नदन्तो भीमविक्रमाः ॥ ६ ॥
1ab अनुशिष्टा यथा सर्वे सुग्रीवेण वनौकसः ।
1cd स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥ ७ ॥
2ab नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
2cd क्ष्वेडन्तो धावमानाश्च प्रययुस्ते महाजवाः ॥ ८ ॥
3ab आनेष्यामो वयं सीतामपि मृत्युमुखागतां ।
पातालतलसंस्थां वा यदिवाप्युदधिं गतां ॥ ९ ॥

3cd प्रतिज्ञां चक्रिरे वीराः प्लवमाना महौजसः ।
4ab अहमेको हनिष्यामि रावणं दुष्टमाहवे ॥१०॥
4cd तथैवोन्मथ्य तरसा हरिष्ये जनकात्मजां ।
5ab किं बहुना श्रमेणाद्य भवद्भिः श्रूयतामिह ॥११॥
5cd अहमेवानयिष्यामि पातालादपि जानकीं ।
6ab विधमिष्याम्यहं वृक्षांश्चालयिष्यामि पर्वतान् ॥१२॥
6cd वसुधां दारयिष्यामि क्षोभयिष्यामि सागरान् ।
7ab अहं योजनविंशानां प्लविता नात्र संशयः ॥१३॥
8ab अबुद्धिर्वानरपतिर्यः क्षोभयति वानरान् ।
8cd अहमेको भविष्यामि कार्यस्यैतस्य साधकः ॥१४॥
9ab भूतले सागरे वापि सरिच्छैलेषु वा पुनः ।
9cd पातालस्यापि वा मध्ये न विहन्येत मे गतिः ॥१५॥
10ab एवमेकैकशस्तत्र वानरा बलदर्पिताः ।
10cd ऊचुस्ते वचनं तस्मिन् हरिराजस्य संगमे ॥१६॥
11ab एवमुक्त्वा हरिश्रेष्ठाः स्वां स्वां दिशं महाबलाः ।
11cd तदाजग्मुर्महात्मानः सुग्रीवस्य हितैषिणः ॥१७॥
12ab इति राजा दिशः सर्वाः संप्रस्थाप्य विचारकान् ।
12cd कपिसेनापतीन् मुख्यान् सुग्रीवो मुदितोऽभवत् ॥१८॥
13ab रामः प्रस्रवणे तस्मिन् न्यवसत् सहलक्ष्मणः ।
13cd प्रतीक्षमाणास्तं मासं सीताधिगमने कृतं ॥१९॥

37 = XLVI.

14ab गतेषु वानरेन्द्रेषु रामः सुग्रीवमब्रवीत् ।
14cd कथं त्वया महाबाहो दृष्टपूर्वा वसुंधरा ॥ १ ॥
कथं भवान् विजानीति सुहुर्वेंदमिदं महत् ।
पृथिवीमण्डलं सर्वं कथं त्वं गतवानसि ॥ २ ॥
15ab एवमुक्तस्तु रामेण सुग्रीवः प्लवगाधिपः ।
15cd उवाच श्रूयतां राम यथा दृष्टं मया पुरा ॥ ३ ॥
यस्ते मया समाख्यातो दुन्दुभिर्नाम दानवः ।
बलदर्पसमुत्सिक्तो निहतो बालिना रणे ॥ ४ ॥
महिषो नाम तेजस्वी दुन्दुभेः पूर्वजः स्मृतः ।
बलं नागसहस्रस्य धारयन्नकुतोभयः ॥ ५ ॥
बलदर्पसमुत्सिक्तस्त्रासयन् वनगोचरान् ।
किष्किन्धाद्वारमासाद्य समाहूय च बालिनं ॥ ६ ॥
स तेन निहतः संख्ये यथा ते बहुशः श्रुतं ।
तस्मिंश्चिरायमाणे च यथाक्रमभिषेचितः ॥ ७ ॥
अभिषिक्तं च मां दृष्ट्वा चिरादागत्य कोपनः ।
स मां निरस्त्यक्तवान् बाली चतुर्भिः सचिवैः सह ॥ ८ ॥
ततो जवेन काकुत्स्थ विद्रुतोऽहं भयातुरः ।
उत्सार्यमाणस्तेनाहं दृष्टवान् सर्वतो महीं ॥ ९ ॥
25ab नदीश्च विविधाः पश्यन् नगराणि वनानि च ।

25 cd ततः पूर्वामहं गत्वा दक्षिणां दिशमाश्रितः ॥ १० ॥
26 ab दिशं च पश्चिमां भूयो गतोऽस्मि भयशङ्कितः ।
26 cd चिराच्च वायुपुत्रो मां संस्मृत्येदं वचोऽब्रवीत् ॥ ११ ॥
शप्तो बाली मतङ्गेन पुरा महिषकारणात् ।
इह ते न प्रवेष्टव्यमृष्यमूकवनं कपे ॥ १२ ॥
28 ab शतधा ते स्फुटेन्मूर्धा प्रविशेस्त्वमिदं यदि ।
27 ab इदानीं मे स्मृतो राजन्नृष्यमूको महागिरिः ॥ १३ ॥
तं तु गच्छाम वै सर्वे तत्रासौ न भविष्यति ।
ततोऽहं तद्भयाक्रान्तः शतकृत्वा वसुन्धरां ॥ १४ ॥
हनूमत इति श्रुत्वा प्रविष्टोऽस्मि तमाश्रमं ।
समागतस्त्वया यत्र मया सख्यमवाप्य ते ॥ १५ ॥
नाचिन्तयं रिपुं यत्र मतङ्गभयमोहितं ।
यत्राभिषेचितो राज्ये त्वयाहं रघुनन्दन ॥ १६ ॥
निहत्य बालिनं संख्ये भयमुत्सृज्य दूरतः ।
एवं राघव तत्त्वेन मयैषा पृथिवी तदा ॥ १७ ॥
जम्बुद्वीपश्च विस्तीर्णः प्रत्यक्षमुपलक्षितः ।
30 cd पृथिवीमण्डलं कृत्स्नं शैला नद्यो वनानि च ।
दृष्टमेतन्मया राजन् यन्मां त्वं परिपृच्छसि ॥ १८ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे वानरप्रयाणं नाम पञ्चचत्वारिंशः सर्गः — पृथिवीमण्डलपरिज्ञाननिवेदनं नाम षट्चत्वारिंशः सर्गः ॥

38 = XLVII.

अन्विष्यन्तस्ततः सीतां सर्वे ते कपियूथपाः ।
पृथिवीं परिचिन्वन्तः सशैलवनकाननां ॥ १ ॥
11ab व्यादिष्टाः कपिसिंहेन यथोक्तं सर्व एव हि ।
11cd व्यचिन्वन्त दिशः सर्वाः सीताधिगमने तदा ॥ २ ॥
12ab ते सरांसि गिरीन् सर्वान् सङ्कटानि वनानि च ।
12cd दरीर्दुर्गांश्च शैलांश्च कृत्स्नांस्तानभिचक्रमुः ॥ ३ ॥
13ab निर्झराणि नितम्बांश्च विचिन्वन्तस्ततस्ततः ।
सुग्रीवेणाभिसंख्यातान् देशांस्ते वानरर्षभाः ॥ ४ ॥
13cd विचेरुर्वृक्षबहुलान् सानुप्रस्थाननेकशः ।
14ab सर्वे सर्वनिवासांश्च सीताधिगमने धृताः ॥ ५ ॥
14cd समागच्छन् तु मेदिन्या दिग्भागेषु प्लवङ्गमाः ।
15ab संवर्तयन्तः शैलेषु वानरा विविधांस्तरून् ॥ ६ ॥
विचेयं प्रथमे मासि कृत्वा प्रस्रवणे गिरौ ।
कपिराजं समासेदुर्निराशा हरियूथपाः ॥ ७ ॥
17ab विचित्य तु दिशं पूर्वां विनतः प्लवगैः सह ।
17cd अदृष्ट्वैव ततः सीतां किष्किन्धामाजगाम सः ॥ ८ ॥
18ab उत्तरां तु दिशं सर्वां विचित्य स महाकपिः ।
18cd अदृष्ट्वैवागतः सीतां वीरः शतबलिर्हरिः ॥ ९ ॥

सुषेणः पश्चिमां गत्वा प्राप्य प्रस्रवणं गिरिं ।
निवृत्य मासे संपूर्णे सुग्रीवं संददर्श ह ॥ १० ॥
ते प्रस्रवणपार्श्वस्थमभिगम्याभिवाद्य च ।
आसीनं सह रामेण सुग्रीवमिदमब्रुवन् ॥ ११ ॥
विचिताः पर्वताः सर्वे वनानि गहनानि च ।
निम्नगाः सागरान्ताश्च सर्वे जनपदास्तथा ॥ १२ ॥
गुहाश्च विविधाकाराः संक्रमाः परिवर्तिताः ।
उद्भूताश्च लतागुल्मास्तृणं च विदलीकृतं ॥ १३ ॥
महातेजांसि घोराणि महासत्त्वबलानि च ।
सत्त्वान्यतिप्रवृद्धानि त्रासितानि हतानि च ॥ १४ ॥
रावणं मन्यमानैश्च तत्र तत्र प्लवङ्गमैः ।
प्रविशन्ति नदन्तश्च धावन्तश्च प्लवङ्गमाः ॥ १५ ॥
प्लवमाना व्रजन्तश्च पर्यधावन्त वानराः ।
ये चैव गहना देशा विचितास्ते पुनः पुनः ॥ १६ ॥
आगमप्रतिकारश्च वानरैस्तत्र चेष्टितः ।
प्रवृत्तिर्न च वैदेह्याः क्वचिदप्युपलभ्यते ॥ १७ ॥
हनूमान् राघवार्थे तु यत्नवान् प्रियदर्शनः ।
आगमं तस्य काङ्क्षामो ध्रुवं सोऽधिगमिष्यति ॥ १८ ॥
उदारसत्त्वाभिजनो हनूमान् स मैथिलीं ज्ञास्यति वानरेन्द्रः ।
दिशं च यामेव हता हि सीता तामाश्रितो वायुसुतो महात्मा ॥ १९ ॥

## XLVIII.

अथाङ्गदमुखैः सार्द्धं हनूमान् वानरैस्ततः ।
सुग्रीवेण यथोद्दिष्टो दक्षिणामगमद्दिशं ॥ १ ॥
स विन्ध्यवनमागम्य सर्वैस्तैर्हरिभिर्वृतः ।
विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ २ ॥
शैलाग्राणि नदीं दुर्गां कन्दराणि वनानि च ।
वृक्षषण्डांश्च विस्तीर्णान् सर्वान् सवनपादपान् ॥ ३ ॥
अन्वेषमाणास्तु तथा सर्वे ते हरियूथपाः ।
न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजां ॥ ४ ॥
फलमूलानि वन्यानि भक्षयन्तो वने चराः ।
जानकीं मृगयामासुः पिबन्तः सलिलं शुचि ॥ ५ ॥
तत्रैव वसतां तेषां स कालो व्यत्यवर्त्तत ।
स हि देशो दुरन्वेष्यो गुहागहनवान् महान् ॥ ६ ॥
त्यक्त्वा तु तं ततो देशं सर्वे ते हरियूथपाः ।
देशमन्यं दुराधर्षमन्वैषन्नकुतोभयाः ॥ ७ ॥
यत्र वै निष्फला वृक्षा निष्पत्राः पुष्पवर्जिताः ।
निस्तोयाः सरितो यत्र यत्र मूलं सुदुर्लभं ॥ ८ ॥
न सन्ति महिषा यत्र न मृगा नापि हस्तिनः ।
शार्दूलाः पक्षिणो वापि ये चान्ये वनगोचराः ॥ ९ ॥

10ab स्निग्धपत्राः स्थलेजाताः पद्मिन्यः फुल्लपङ्कजाः ।
10cd प्रेक्षणीयाः सुगन्धाश्च भ्रमरैः परिशिञ्जिताः ॥१०॥
11ab कण्ठो नाम महाभागः सत्यवादी तपोधनः ।
11cd महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ॥११॥
12ab तस्य तस्मिन् वने पुत्रो बालको दशवार्षिकः ।
12cd प्रनष्टो जीवितान्ताय क्रुद्धः सोऽभून्महामुनिः । ॥१२॥
13ab तेन धर्मात्मना शप्तं सर्वं तत् सुमहद्वनं ।
13cd ततोऽभवदनाधृष्यं मृगपक्षिगणैरपि ॥१३॥
14ab तत्र ते काननान्तानि गिरीणां निर्झराणि च ।
14cd गहनानि नदीनां च व्यचिन्वन् सहिताः समं ॥१४॥
15ab तत्रापि ते महात्मानो नापश्यन् जनकात्मजां ।
15cd हर्तारं रावणं वापि रामस्याप्रियकारिणं ॥१५॥
16ab अवगतं तु ते कृत्वा तत् सर्वं काननं पुनः ।
16cd अन्यदेव महाघोरं प्राविशन् गिरिगह्वरं ॥१६॥
17ab ते प्रविश्य तु तद्भीमं लतागुल्मसमावृतं ।
17cd ददृशुः सुमहाकायमसुरं सुरनिर्भयं ॥१७॥
18ab तं दृष्ट्वा वानरा भीमं स्थितं शैलमिवापरं ।
18cd गाढं परिदधुः सर्वे तस्मिन् पतितचक्षुषः ॥१८॥
सोऽपि मारीचतनयस्तृणवत् तानपश्यत ।
तमङ्गदः सुसंक्रुद्धो युद्धाय समुपाद्रवत् ॥१९॥

19ab राक्षसोऽपि सुसंक्रुद्धस्तिष्ठ तिष्ठेत्युपाह्वय ।
19cd मुष्टिमुद्यम्य विनदन्नङ्गदं समुपाद्रवत् ॥ २० ॥
20ab तमापतन्तं वेगेन बालिपुत्रोऽङ्गदो बली ।
20cd रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह ॥ २१ ॥
21ab स बालिपुत्राभिहतो वक्त्राच्छोणितमुद्गिरन् ।
21cd राक्षसो न्यपतद्भूमौ वज्राहत इव द्रुमः ॥ २२ ॥
22ab ते तु तस्मिन् निपतिते वानरा जितकाशिनः ।
22cd प्रव्यचिन्वन् प्रयत्नेन सर्वं तं गिरिगह्वरं ॥ २३ ॥
23ab ते विचित्य पुनः खिन्ना विनिष्पत्य समागताः ।
23cd एकान्ते वृक्षमूलेषु निषेदुर्दीनमानसाः ॥ २४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे वानरप्रत्यागमनं नाम सप्तचत्वारिंशः सर्गः — असुरबधो नाम अष्टाचत्वारिंशः सर्गः ॥

## 40 = XLIX.

1ab ततो वायुसुतः श्रीमानङ्गदप्रमुखान् हरीन् ।
1cd आसीनानब्रवीद्धीमान् वाक्यं वाक्यविशारदः ॥ १ ॥
परिश्रान्तान् महाप्राज्ञः समानीय शनैरिदं ।
सानूनि गिरयो नद्यो दुर्गाणि गहनानि च ॥ २ ॥
निर्झरा गिरिशृङ्गाणि वनान्युपवनानि च ।
गुह्यकानां निवासाश्च गन्धर्वभवनानि च ॥ ३ ॥
गुहाश्च विविधाकारा मार्गितानि ततस्ततः ।
2ab विचितं च वनं सर्वं तृणं च विदलीकृतं ॥ ४ ॥
2cd पश्यामो न च वैदेहीं रावणं चापि राक्षसं ।
3ab सुग्रीवेण यथोद्दिष्टा देशाः सुविचिताः कृताः ॥ ५ ॥
3cd यांश्च नोद्दिष्टवान् देशांस्ते चापि विचिताः पृथक् ।
नैव प्रवृत्तिं शृणुमस्तयोः कस्यचिदन्तिकात् ॥ ६ ॥
कालश्च सुमहान् यातो मार्गतां जनकात्मजां ।
कृतश्च कालपर्यन्तः सुग्रीवश्चोग्रशासनः ॥ ७ ॥
न च सा दृश्यते सीता रामपत्नी च रावणः ।
4ab उच्यतामत्र दुर्धर्षा यन्नः क्षेममनन्तरं ॥ ८ ॥
4cd न हि सा दृश्यते सीता यन्निमित्तं भ्रमामहे ।
5ab एवं ब्रुवाणं तं वाक्यमङ्गदः पवनात्मजं ॥ ९ ॥

5cd उवाच वचनं वीरो वानराणां हितावहं ।
6ab सर्व एव समर्थाश्च बलवन्तश्च वानराः ॥ १० ॥
अलं नैराश्यमागत्य सीताधिगमनं प्रति ।
6cd ते वयं परिमार्गामः पुनस्तां जनकात्मजां ॥ ११ ॥
संत्यज्यापि प्रियान् प्राणान् यथा पश्याम मैथिलीं ।
अनिर्वेदश्च दाक्ष्यं च मनसश्च पराजयः ॥ १२ ॥
8ab अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलं ।
7ab यद्यप्येतद्वनं सर्वं विचितं हि समाहितैः ॥ १३ ॥
7cd खेदं त्यक्त्वा पुनः सर्वं विचिन्वन्तु वनौकसः ।
8cd अलं निर्वेदमागत्य न हि नो हीदृशं क्षमं ॥ १४ ॥
9ab सुग्रीवः क्रोधनो राजा तीक्ष्णदण्डश्च वानरः ।
9cd भेतव्यं तस्य शूरस्य रामस्य च महात्मनः ॥ १५ ॥
11ab हितार्थमेतदुक्तं मे क्रियतां यदि रोचते ।
11cd उच्यतां वा क्षमं यन्नः सर्वेषामेव वानराः ॥ १६ ॥
12ab अङ्गदस्य तु तच्छ्रुत्वा वचनं गन्धमादनः ।
12cd उवाच प्रसृतं वाक्यं सर्ववानरसंनिधौ ॥ १७ ॥
13ab सदृशं चानुरूपं च वाक्यमङ्गदभाषितं ।
13cd हितं च पथ्यं च भवेत् क्रियमाणं न संशयः ॥ १८ ॥
14ab पुनर्मार्गामहे शैलान् सकन्दरगुहान्तरान् ।
14cd काननानि विचित्राणि नदीः प्रस्रवणानि च ॥ १९ ॥

15ab यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना ।
15cd निश्चयं परमं कृत्वा विचिन्वन्तु वनौकसः ॥ २० ॥
16ab ततः सर्वे समुत्थाय वानरास्ते महाबलाः ।
16cd विन्ध्यकाननसंकीर्णां विचेरुर्दक्षिणां दिशं ॥ २१ ॥
17ab ते शारदाभ्रप्रतिमं नगं रजतसंनिभं ।
17cd शृङ्गवन्तं दरीवन्तमारोहन् हरिपुङ्गवाः ॥ २२ ॥
18ab तत्र लोध्रवनं रम्यं सप्तपर्णवनानि च ।
18cd व्यचिन्वंस्ते हरिवराः सीतादर्शनकाङ्क्षिणः ॥ २३ ॥
19ab तस्याग्रमधिरूढास्ते श्रान्ताः सुलघुविक्रमाः ।
19cd न चापश्यन्त वैदेहीं रामस्य महिषीं प्रियां ॥ २४ ॥
20ab ते तु दृष्टिहतं कृत्वा तं शैलं बहुकन्दरं ।
20cd अवारोहन्त हरयः प्रविचित्य समन्ततः ॥ २५ ॥
21ab अवरुह्य च ते भूमिं श्रान्ता दुःखितचेतसः ।
21cd स्थिता मुहूर्त्तं तत्रासन् वृक्षमूलान्युपाश्रिताः ॥ २६ ॥
22ab ते मुहूर्त्तं समाश्वस्ताः किञ्चिद्भ्रष्टपरिश्रमाः ।
22cd पुनरेवोद्यताः कृच्छ्रान्मार्गितुं जनकात्मजां ॥ २७ ॥
दरीशिखरनद्योघलतापादपसंकुलं ।
विन्ध्यं वानरमुख्यास्ते मार्गन्ति स्म समन्ततः ॥ २८ ॥
प्रयत्नतस्ते हरयः समन्ततो गुहासु शैलान्तरनिर्झरेषु । ✓
अन्विष्यमाणा जनकात्मजां च भ्रमन्ति तस्मिन् गिरिसंकटे तदा ॥ २९ ॥

41 = L.

1ab तमासाद्याङ्गदमुखैर्हरिभिर्हनुमांस्तदा ।
1cd व्यचिनोत् तस्य विन्ध्यस्य गुहाश्च गहनानि च ॥ १ ॥
2ab ते मार्गमाणाः संरब्धा रामार्थे त्यक्तजीविताः ।
2cd घोराणि गिरिदुर्गाणि प्रविशन्ति प्लवङ्गमाः ॥ २ ॥
तेषां तत्रैव वसतां स कालो व्यत्यवर्तत ।
3ab स हि देशो दुराधर्षो लतागहनवान् महान् ॥ ३ ॥
ततो भूयो विचिन्वाना हनूमत्प्रमुखास्तदा ।
वृक्षच्छायोपविष्टास्ते दृष्ट्वान्योन्यं समब्रुवन् ॥ ४ ॥
परस्परेणावहिताः सीतादर्शनकाङ्क्षिणः ।
4cd गयो गवाक्षो गवयः शरभो गन्धमादनः ॥ ५ ॥
5ab मैन्दश्च द्विविधश्चैव हनूमान् जाम्बवान् नलः ।
5cd अङ्गदो युवराजश्च तारश्च वनगोचरः ॥ ६ ॥
गिरिजालावृतां दुर्गां मार्गित्वा दक्षिणां दिशं ।
क्षुत्पिपासापरिश्रान्ताः क्लान्ताश्च सलिलार्थिनः ॥ ७ ॥
जलं च सीतां च पुनर्मृगयामासुरातुराः ।
6ab समागम्य ततः सर्वे श्रमार्त्ता वनगोचराः ॥ ८ ॥
6cd जग्मुर्विषादं संत्रस्ताः सुग्रीवाद्वानराधिपात् ।
7ab ते विषण्णमुखा दीनाः सुग्रीवभयमोहिताः ॥ ९ ॥
7cd अवीक्षमाणाः सीतां च रावणं च सुदुःखिताः ।

8ab बुभुक्षिताः परिश्रान्तास्तृषिताः सलिलार्थिनः ॥१०॥
8cd अथावदीर्णं ददृशुर्विलं वृक्षैः समावृतं ।
तमसा महता ग्रस्तमिन्द्रस्यापि भयावहं ॥११॥
8ef ततः क्रौञ्चाश्च हंसाश्च सारसाः कृकरास्तथा ।
9ab जलार्द्राश्चक्रवाकाश्च पद्मरेणुभिरञ्जिताः ॥१२॥
9cd कुररा मञ्जुलाश्चैव तथैव चलकुक्कुटाः ।
रक्ताङ्गाश्चैव कादम्बा निष्पतन्तः समन्ततः ॥१३॥
9ef कलहंसाः प्लवाश्चैव तथान्ये जलचारिणः ।
10ab ते तु दृष्ट्वा विलं सर्वे विस्मयाकुलचेतसः ॥१४॥
10cd अभवन् दीनमनसो हृष्टाश्च जलशङ्कया ।
11ab ततः पर्वतसंकाशो हनूमान् मारुतात्मजः ॥१५॥
11cd समेतान् वानरान् सर्वानिदं वचनमब्रवीत् ।
गिरिजालावृतां दुर्गां मार्गित्वा दक्षिणां दिशं ॥१६॥
12cd वयं सर्वे परिश्रान्ता न च पश्याम मैथिलीं ।
13ab अस्मादपि तु पश्यामो विलान्निष्पततो बहून् ॥१७॥
13cd जले चरान् पक्षिगणान् शतशोऽथ सहस्रशः ।
14ab नूनं सलिलवानत्र कूपो वा यदि वा ह्रदः ॥१८॥
14cd भविष्यति तथा ह्येते निष्पतन्ति पतत्रिणः ।
15ab प्रविश्यात्रापनेष्यामस्त्रासं सलिलजं वयं ॥१९॥
15cd सीतां च मृगयिष्यामः सर्वत्रास्मिन् महाविले ।

व्यक्तं बहूदको ह्यत्र भविष्यति महाह्रदः ॥ २० ॥
16ab इत्युक्त्वा तद्बिलं सर्वे विविशुस्तमसावृतं ।
16cd अचन्द्रसूर्यं हरयो भीकरं लोमहर्षणं ॥ २१ ॥
17ab ततस्तस्मिन् बिले दुर्गे लतापादपसंकुले ।
हनूमानग्रतस्तेषामङ्गदाद्या अनन्तरं ॥ २२ ॥
17cd अन्योन्यं संपरिष्वज्य जग्मुर्योजनमन्तरं ।
स्वसंज्ञया विमूढास्ते वानराश्चक्रुरारवं ॥ २३ ॥
18ab ते नष्टसंज्ञास्तृषिताः संभ्रान्ताः सलिलार्थिनः ।
18cd विविशुस्तद्बिलं घोरं मासमात्रं प्लवङ्गमाः ॥ २४ ॥
19ab ते कृशा दीनवदनाः परिश्रान्ताः पिपासिताः ।
19cd यदृच्छयैव ददृशुरालोकं सूर्यसंनिभं ॥ २५ ॥
20ab ततस्तं देशमागम्य प्रनष्टतिमिरं शुभं ।
20cd ददृशुः काञ्चनान् वृक्षान् वैश्वानरसमप्रभान् ॥ २६ ॥
21ab सालान् प्रियङ्गून् वकुलान् पनसांश्चम्पकान् वरान् ।
21cd अशोकान् नागपुष्पांश्च नानाशकुनिनादितान् ॥ २७ ॥
22ab तरुणादित्यसंकाशान् रक्तैः किसलयैर्वृतान् ।
22cd जातरूपमयैश्चापि चरद्भिर्मत्स्यकच्छपैः ॥ २८ ॥
24ab नलिनीस्तत्र ददृशुः प्रसन्नसलिलाः शुभाः ।
24cd काञ्चनानि विमानानि स्फाटिकानि गृहाणि च ॥ २९ ।
25ab तापनीयगवाक्षाणि मुक्ताजालान्तराणि च ।

25cd हैमराजतभौमानि वैदूर्यमणिवन्ति च ॥३०॥
26ab प्रभया भ्राजमानानि विचित्राणि बृहन्ति च ।
26cd ददृशुस्तत्र हरयो रत्नराशीन् समन्ततः ॥३१॥
27ab दन्तकाञ्चनचित्राणि शयनान्यासनानि च ।
27cd स्वास्तीर्णानि विशालानि ददृशुस्ते वनौकसः ॥३२॥
27ef हैमराजतकांस्यानां भाजनानां च संचयान् ।
31ab शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ॥३३॥
31cd महार्हाणि च पानानि मधूनि विविधानि च ।
32ab कुथानां कम्बलानां च राङ्कवाणां च संचयान् ॥३४॥
अगुरूणां सुगन्धानां चन्दनानां तथैव च ।
32cd वाससां च महार्हाणामजिनानां च संचयान् ॥३५॥
33ab तत्र तत्र प्रदीप्तांश्च काञ्चनानां च संचयान् ।
33cd ददृशुर्वानरा दिव्यान् वैश्वानरशिखोपमान् ॥३६॥
34ab ददृशुस्तत्र चासीनां विष्टरे काञ्चने शुभे ।
34cd तापसीं नियताहारां चीरकृष्णाजिनाम्बरां ॥३७॥
35ab ततो हनूमान् गिरिसंनिकाशः कृताञ्जलिस्तामभिवाद्य विद्वान् ।
35cd पप्रच्छ का त्वं भवनं विलं च रत्नानि चेमानि वराणि कस्य ॥३८॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे दक्षिणस्यां दिशि
सीतान्वेषणं नाम ऊनपञ्चाशः सर्गः — विलप्रवेशो
नाम पञ्चाशः सर्गः ॥

L.E
42+43 = LI.

1ab अथ तां हनूमान् प्राज्ञः पुनः कृष्णाजिनाम्बरां ।
1cd अब्रवीत् सुमहाभागां तापसीं शंसितव्रतां ॥ १ ॥
2ab वानराः स्म महाभागे सततं वनगोचराः ।
2cd इदं प्रविष्टाः सहसा विलं तिमिरसंवृतं ॥ २ ॥
3ab क्षुधिताश्च परिश्रान्ताः परिखिन्नाः पिपासिताः ।
3cd इदं धरण्या विवरं प्रविष्टाः स्म जलार्थिनः ॥ ३ ॥
4ab दृष्ट्वाद्भुतमिदं दिव्यं श्रीमत् सुगहनं विलं ।
4cd भूयो वयं प्रव्यथिताः संभ्रान्ता नष्टचेतसः ॥ ४ ॥
5ab कस्येमे काञ्चना वृक्षास्तरुणादित्यसंनिभाः ।
7ab पुष्पिताः फलिताश्चापि पुण्याः सुरभिगन्धिनः ॥ ५ ॥
5cd शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ।
6ab काञ्चनानि विमानानि राजतानि गृहाणि च ॥ ६ ॥
6cd तापनीयगवाक्षाणि मुक्ताजालान्तराणि च ।
7cd इमे जाम्बूनदमयाः पादपाः कस्य तेजसा ॥ ७ ॥
8ab पद्मानि च महार्हाणि सुगन्धीनि कथं त्विह ।
8cd कथं मत्स्याश्च सौवर्णाश्चरन्ति विमले जले ॥ ८ ॥
9ab आत्मानमनुभावं च यस्य चेदं महद्विलं ।
9cd अजानतां नः सर्वेषां व्यक्तं व्याख्यातुमर्हसि ॥ ९ ॥

10ab एवमुक्ता हनूमता तापसी धर्मचारिणी ।
10cd प्रत्युवाच हनूमन्तं सर्वभूतहिते रता ॥१०॥
11ab मयो नाम महातेजा मायावी दानवर्षभः ।
11cd तेनेदं निर्मितं सर्वं मायया काञ्चनं विलं ॥११॥
12ab पुरा दानवमुख्यानां विश्वकर्मा बभूव सः ।
12cd तेनेदं काञ्चनमयं निर्मितं भवनोत्तमं ॥१२॥
13ab स हि वर्षसहस्राणि तपस्तप्त्वा महावने ।
13cd पितामहाद्वरं लेभे सर्वमौशनसं बलं ॥१३॥
14ab विहाय मृत्युं बलवान् सर्वकामेश्वरस्तदा ।
14cd उवास सुखितः कालं कञ्चिदस्मिन् महाविले ॥१४॥
15ab तमप्सरसि हेमायां सक्तं दानवपुङ्गवं ।
15cd आगत्याशनिमादाय निजघान पुरन्दरः ॥१५॥
16ab तदिदं ब्रह्मणा दत्तं हेमायां वनमुत्तमं ।
16cd शाश्वताः कामभोगाश्च गृहं चेदं हिरण्मयं ॥१६॥
17ab दुहिता हेमसावर्णेरहं नाम्ना स्वयम्प्रभा ।
17cd इदं रक्षामि भवनं हेमाया वानरर्षभाः ॥१७॥
18ab मम प्रियसखी हेमा नृत्यगीतविशारदा ।
18cd तया सखित्वाद्बद्धाहं रक्षामि भवनोत्तमं ॥१८॥
21ab एवमुक्ते शुभे वाक्ये तापस्या धर्मसंहिते ।
21cd हनूमान् कपिशार्दूलः प्रत्युवाच स्वयम्प्रभां ॥१९॥

अर्थिनः स्म प्रयच्छार्ये जलं जलजलोचने ।
म्रियमाणान् निराहारान् संजीवयितुमर्हसि ॥ २० ॥
सा तु तस्य वचः श्रुत्वा तापसी धर्मचारिणी ।
आदाय फलमूलानि विधिनोपजहार ह ॥ २१ ॥
प्रतिगृह्य तु ते तस्यास्तदातिथ्यं वने चराः ।
विधिवद्भक्षयामासुस्तां चैव समपूजयन् ॥ २२ ॥
ते भक्षयित्वा तत् सर्वं पीत्वा च विमलं जलं ।
सर्वे ददृशुरालोकं सर्वतो हरियूथपाः ॥ २३ ॥
प्रसन्नमनसः सर्वे सर्वे च विगतज्वराः ।
संजातबलरूपाश्च तत्रासन् हरियूथपाः ॥ २४ ॥
अथ तानब्रवीत् सर्वान् संहृष्टान् वनगोचरान् ।
इदं वचनमव्यग्रं तापसी ब्रह्मचारिणी ॥ २५ ॥
किं कार्यं कस्य वा हेतोः कान्ताराणि समाश्रिताः ।
कथं चेदं विलं दुर्गं युष्माभिरुपलक्षितं ॥ २६ ॥
वानरा यदि वः खेदः प्रनष्टो मूलभक्षणात् ।
यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि कथ्यतां ॥ २७ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान् मारुतात्मजः ।
आर्जवेन यथा तत्त्वमाख्यातुमुपचक्रमे ॥ २८ ॥
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकं वनं ॥ २९ ॥

5ab लक्ष्मणेन सह भ्रात्रा भार्यया चापि सीतया ।
5cd तस्य भार्या जनस्थाने रावणेन हृता बलात् ॥ ३० ॥
6ab तस्य वीरः सखा प्राज्ञः सुग्रीवो नाम वानरः ।
6cd राजा वानरवीराणां येन प्रस्थापिता वयं ॥ ३१ ॥
अगस्त्यचरितामाशां दक्षिणां यमरक्षितां ।
सहैभिर्वानरैर्वीरैरङ्गदप्रमुखैर्वृताः ॥ ३२ ॥
7ab रावणं सहिताः सर्वे राक्षसं कामरूपिणं ।
7cd सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ॥ ३३ ॥
8ab विचिन्वन्तो वयं सर्वे समग्रां दक्षिणां दिशं ।
8cd नाधिगच्छामो वैदेहीं रावणं चापि तं रिपुं ॥ ३४ ॥
9ab बुभुक्षिताः परिश्रान्ता वृक्षमूलान्युपाश्रिताः ।
9cd विवर्णवदनाः सर्वे सुग्रीवभयकर्षिताः ॥ ३५ ॥
10ab तृष्णया चार्दिताः सर्वे सर्वे ध्यानपरायणाः ।
10cd नाधिगच्छामहे पारं मग्नाश्चिन्तामहार्णवे ॥ ३६ ॥
11ab चारयन्तस्ततश्चक्षुः पश्यामो विवृतं बिलं ।
11cd लतापादपसंछन्नं महदास्यमिव क्षितेः ॥ ३७ ॥
12ab ततो हंसाः समुत्पेतुः पक्षैः सजलशीकरैः ।
12cd कुरराः सारसाश्चैव मञ्जुलाश्चक्रसाह्वयाः ॥ ३८ ॥
कादम्बा जलपृक्ताश्च तथान्ये च जले चराः ।
13ab ततो नो मतिरुत्पन्ना दृष्ट्वा तान् जलचारिणः ॥ ३९ ॥

13cd साधत्र प्रविशामेति मयोक्ता वै प्लवङ्गमाः ।
14ab एषामपि च सर्वेषामैकमत्यमुपागतं ॥ ४० ॥
14cd गच्छामः प्रविशामेति भर्तृकार्ये त्वरावतां ।
15ab परिगृह्य ततो गाढं वयं हस्तं परस्परं ॥ ४१ ॥
15cd इदं प्रविष्टाः सहसा विलं तिमिरसंवृतं ।
16ab एतन्नः कार्यमेतेन कृत्येन विलमागताः ॥ ४२ ॥
16cd त्वां चैवोपगताः सर्वे म्रियमाणा बुभुक्षया ।
आतिथ्यधर्मदत्तानि त्वया मूलफलानि च ॥ ४३ ॥
अस्माभिरुपभुक्तानि बुभुक्षाश्रमकर्षितैः ।
17ab ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः ॥ ४४ ॥
17cd एवमुक्ता तु सा तत्र तापसी वायुसूनुना ।
18ab प्रत्युवाच ततः सर्वान् वानरान् संशितव्रता ॥ ४५ ॥
18cd सर्वेषां परितुष्टास्मि वानराणां महौजसां ।
19ab चरन्त्या मम धर्मं हि न कार्यमिह केनचित् ॥ ४६ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे स्वयम्प्रभासंवादो
नाम एकपञ्चाशः सर्गः ॥

b.E E.E
44 = LII.

10b एवमुक्ते शुभे वाक्ये तापस्या धर्मसंहिते ।
हनूमान् कपिशार्दूलः प्रत्युवाच पुनर्वचः ॥ १ ॥
भवत्यानुगृहीताः स्म सर्व एव वनौकसः ।
कृतमातिथ्यमस्माकं श्रमश्चापगतो महान् ॥ २ ॥
कथितं चापि ते तत्त्वमस्माभिर्धर्मचारिणि ।
कारणं चापि वैदेह्या मार्गणं ते निवेदितं ॥ ३ ॥
विचितः शतशश्चायं देशो दक्षिणसंश्रितः ।
प्रेषितैर्वानरेन्द्रेण सीतार्थेऽस्माभिरागतैः ॥ ४ ॥
समयश्च कृतस्तेन कपीनां संनिधौ तदा ।
पूर्णे मासि निवर्तध्वं वसन् बध्यो भवेन्मम ॥ ५ ॥
इति प्रतिसमादिष्टा भर्त्रा वयमनिन्दिते ।
विचिन्वन्तो दिशः सर्वा वानराः शीघ्रगामिनः ॥ ६ ॥
वयं तु दक्षिणामाशां सुग्रीवेण प्रचोदिताः ।
समन्तात् परिधावन्तः पश्यामो विवृतं विलं ॥ ७ ॥
प्रविश्य चैव सहसा सीताविचयकारणात् ।
न च पश्यामि निष्काशं विलादस्मात् सुमध्यमे ॥ ८ ॥
एवमुक्ते हनूमता सर्वे ते वानरास्तदा ।
10d ऊचुः प्राञ्जलयो भूत्वा तापसीं धर्मचारिणीं ॥ ९ ॥

2ab लोलस्वभावैरस्माभिः किञ्चित् तेऽपकृतं यदि ।
2cd सर्वं मर्षयितव्यं ते सर्वैरेव कृतोऽञ्जलिः ॥ १० ॥
3ab एकं तु वयमिच्छामस्त्वां वक्तुं धर्मचारिणि ।
3cd श्रूयतां चाभिधास्यामः सर्व एव तवाग्रतः ॥ ११ ॥
4ab सर्वे परिगता देशा विलेऽस्मिन् सर्ववानरैः ।
4cd न च पश्याम तं देशं प्रविष्टा येन वानराः ॥ १२ ॥
5ab तदिच्छामो वयं सर्वे विलादस्मान्मनोरमात् ।
5cd त्वत्प्रसादाद्धिनिर्गन्तुं त्वं हि नः परमा गतिः ॥ १३ ॥
6ab यः कृतः समयोऽस्माकं सुग्रीवेण महात्मना ।
6cd स कालः समतिक्रान्तो विलेऽस्मिन् परिधावतां ॥ १४ ॥
सा त्वमस्माद्विलात् सर्वानुत्तारयितुमर्हसि ।
तीक्ष्णो हि राजा सुग्रीवः प्रियार्थी राघवस्य च ॥ १५ ॥
7ab महच्च कार्यमस्माभिः कर्तव्यं धर्मचारिणि ॥
7cd तच्चापि न कृतं कार्यमिह नः परिलङ्घनात् ॥ १६ ॥
7ef तद्राजभयभीतानां त्राणं भवितुमर्हसि ।
अस्मानस्माद्विलाद्दुर्गादुत्तारयितुमर्हसि ॥ १७ ॥
8ab इति ब्रुवाणांस्तान् सर्वान् सर्वभूतहिते रता ।
8cd उवाच परमप्रीता विलादुत्तारणेच्छया ॥ १८ ॥
9ab इदं विबुधराजेन विलं शक्रेण संयुगे ।
9cd असुरार्थे विमुक्तेन पुरा वज्रेण दारितं ॥ १९ ॥

10ab दुरासदं सुदुर्धर्षं बहुरत्नसमाकुलं ।
10cd महाप्राज्ञेन पुत्रार्थे निर्मितं विश्वकर्मणा ॥ २० ॥
11ab तस्य वैरातिसर्गेण विलेऽस्मिन् वज्रदारिते ।
11cd जीवितं दुष्करं मन्ये प्रविष्टेन निवर्तितुं ॥ २१ ॥
12ab तपसस्तु प्रभावेन नियमोपार्जितेन च ।
12cd सर्व एव विलादस्मान्निर्गमिष्यथ वानराः ॥ २२ ॥
13ab निमीलयत नेत्राणि सर्वे वानरयूथपाः ।
13cd न हि निष्क्रमितुं शक्यं चक्षुषि ह्यनिमीलिते ॥ २३ ॥
14ab ततस्ते हरयः सर्वे सुकुमारतलैः करैः ।
14cd समं न्यमीलयंश्चक्षुर्विनिर्गमनकाङ्क्षिणः ॥ २४ ॥
वानरास्तु महात्मानो हस्तरुद्धमुखास्तथा ।
निमेषान्तरमात्रेण विलान्निःसारितास्तया ॥ २५ ॥
15cd ततः सा तान् समुत्तीर्णान् समाश्वास्येदमब्रवीत् ।
16ab एष विन्ध्यो गिरिः श्रीमान् बहुकन्दरनिर्झरः ॥ २६ ॥
16cd एष प्रस्रवणः शैल एष पार्श्वे महोदधिः ।
17ab स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरोत्तमाः ॥ २७ ॥
17cd इत्युक्त्वा तद्बिलं घोरं प्रविवेश तपस्विनी ।
तपोयोगप्रभावेन निमेषान्तरचारिणी ॥ २८ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे विलनिष्क्रमणं
नाम द्वापञ्चाशः सर्गः ॥

L.E E.E
45 = LIII.

1ab वानरास्तु महावीर्या हस्तरुद्धमुखाः स्थिताः -
1cd चक्षूंष्युन्मीलयामासुर्मुहूर्त्तात् सर्व एव हि ॥ १ ॥
2ab ततस्ते ददृशुर्घोरं समुद्रं वरुणालयं ।
2cd अपारमिव गर्जन्तं महोरगनिषेवितं ॥ २ ॥
3ab ततस्तं देशमागम्य सौम्यं वितिमिरं शुभं ।
यथाप्राप्तमकृत्वा च ततो वचनमब्रुवन् ॥ ३ ॥
रामस्य भार्यां तां द्रष्टुं रावणं च निशाचरं ।
4cd स नः कालो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥ ४ ॥
5ab ते विन्ध्यस्य गिरेः पार्श्वे संप्रपुष्पितपादपे ।
5cd उपविश्य महाकायाश्चिन्तामापेदिरे परां ॥ ५ ॥
8ab ततः सिंहर्षभस्कन्धः पीनायतभुजः कपिः ।
8cd युवराजो महद्वाक्यमङ्गदस्तानथाब्रवीत् ॥ ६ ॥
9ab शासनात् कपिसिंहस्य सर्वे वयमिहागताः ।
9cd मासं पूर्णं बिलगता नावबुध्याम वानराः ॥ ७ ॥
तस्मिन् व्यतीते काले तु सुग्रीवेण स्वयं कृते ।
प्रायोपवेशनं युक्तं सर्वेषां नो वनौकसां ॥ ८ ॥
10ab सुग्रीवो बलवांस्तीक्ष्णः प्रकृत्या वानरेश्वरः ।
10ef न क्षमिष्यति सोऽस्माकं व्यतिक्रममिमं प्रभुः ॥ ९ ॥

11ab न हि ज्ञास्यति सुग्रीवो घोरं कर्म कृतं मह्त् ।
11cd सीताधिगमनेऽस्माभिः पापमेव करिष्यति ॥ १० ॥
12ab प्राप्तादेशा वयं सर्वे साधु प्रायमुपास्महे ।
12cd त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च ॥ ११ ॥
13ab न चासौ घातयेद्राजा पश्चात् प्रतिगतान् हि नः ।
13cd बधेनाप्रतिरूपेण मृत्युः श्रेयानिहैव नः ॥ १२ ॥
14ab न चाहं यौवराज्ये वै सुग्रीवेणाभिषेचितः ।
14cd नरेन्द्रेणाभिषिक्तोऽहं रामेण विदितात्मना ॥ १३ ॥
15ab स पूर्वबद्धवैरो मां दृष्ट्वा राजा व्यतिक्रमं ।
15cd घातयिष्यति तीक्ष्णेन दण्डेनातिचिराद्गतं ॥ १४ ॥
16ab किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तकं ।
16cd इहैव प्रायमाशिष्ये रम्ये सागररोधसि ॥ १५ ॥
17ab एतच्छ्रुत्वा तु करुणं युवराजस्य भाषितं ।
17cd ते सर्वे वानरश्रेष्ठा इदं वचनमब्रुवन् ॥ १६ ॥
18ab तीक्ष्णः प्रकृत्या सुग्रीवः प्रियार्थी राघवस्य च ।
18cd अस्मानकृतकार्यांश्च तस्मिंश्च समये गते ॥ १७ ॥
19ab अदृष्टायां च सीतायां दृष्ट्वास्मानागतान् प्रभुः ।
19cd राघवप्रियकामार्थी हनिष्यति न संशयः ॥ १८ ॥
20ab आगांसि न क्षमन्ते हि प्रधानानां नराधिपाः ।
20cd प्रधानभूताश्च वयं सुग्रीवस्य सुसंमताः ॥ १९ ॥

श्रेयः प्रायोपगमनमीदृशे कार्य आगते ।
21ab भयार्दितानां तेषां तु प्लवगानां महात्मनां ॥ २० ॥
21cd उवाच वचनं तारस्तत्कालसदृशं हितं ।
22ab विषादस्त्यज्यतामेष सर्वैरेव प्लवङ्गमैः ॥ २१ ॥
22cd प्रविशामो बिलं दुर्गं वयं यस्माद्विनिर्गताः ।
23ab यदि वो रोचते वाक्यं सर्वेषां हरिपुङ्गवाः ॥ २२ ॥
23cd क्रियतां किं विमर्षेण श्रेयो नः क्रियतामिदं ।
24ab दुर्धर्षं च महच्चेदं बहुभक्ष्यं च वानराः ॥ २३ ॥
24cd तत्र स्थांश्च न नः शक्ताः स्प्रष्टुं सेन्द्राश्च देवताः ।
25ab किं पुनर्मानुषो रामो लक्ष्मणो वापि वीर्यवान् ।
25cd सुग्रीवो वानरेन्द्रो वा तथा सर्वे वनौकसः ॥ २४ ॥

इदं हि मायाविहितं सुदुर्गमं
प्रभूतभक्ष्योदकभोज्यपेयं ।
गृहीतुमिन्द्रोऽपि न नोऽत्र शक्तः
सुग्रीवरामौ सहितौ न चापि ॥ २५ ॥
तदङ्गदस्यापि रुरोच वाक्यम्
26ab ऊचुश्च सर्वे हरयः समेताः ।
यथा न हन्येमहि तद्विधानं
26cd विधीयतां संशयमागताः स्मः ॥ २६ ॥

L.E 46 = E.E LIV.

1ab तथा ब्रुवति तारे तु ताराधिपतिवर्चसि ।
2cd अथ मेने कृतं राज्यं हनूमानङ्गदेन हि ॥ १ ॥
3ab बुद्ध्यासंशयया युक्तं पितुस्तेजोगुणान्वितं ।
3cd चतुर्दशगुणं मेने हनूमान् बालिनः सुतं ॥ २ ॥
4ab आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः ।
4cd शशिनं शुक्लपक्षादौ वर्धमानमिवौजसा ॥ ३ ॥
5ab बृहस्पतिसमं बुद्ध्या विक्रमेण समं पितुः ।
5cd शुश्रूषमाणं तारस्य यथा शक्रं बृहस्पतेः ॥ ४ ॥
6ab भर्तुः कार्ये पराक्रान्तः सर्वशास्त्रविशारदः ।
2ab अभिसंधातुमारेभे हनूमानङ्गदं ततः ॥ ५ ॥
7ab स चतुर्णामुपायानां तृतीयमनुवर्तयन् ।
7cd भेदयामास तान् सर्वान् वानरान् वाक्यसंपदा ॥ ६ ॥
8ab तेषु सर्वेषु भिन्नेषु ततोऽभेदयदङ्गदं ।
8cd भीषणैर्बहुभिर्हेत्वैः शिक्षार्थं ह्यङ्गदं च तैः ॥ ७ ॥
9ab सामर्थ्ये त्वं पितुस्तुल्यो युधि मन्त्रक्रियाविधौ ।
9cd दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥ ८ ॥
10ab नित्यमस्थिरचित्तास्तु हरयो हरिसत्तम ।
10cd न वस्तुं विषहिष्यन्ति पुत्रदारैर्विना त्वया ॥ ९ ॥

11ab न ते त्वामनुरज्येरन् प्रत्यक्षं प्रवदामि ते ।
11cd यथाहं रामसुग्रीवौ लक्ष्मणश्च पितुस्तव ॥ १० ॥
12ab न चाहं न च ते सर्वे सामदानविभेदनैः ।
12cd न दण्डैर्न युधा शक्याः सुग्रीवादपकर्षितुं ॥ ११ ॥
13ab न विग्रहं समं प्राहुर्दुर्बलस्य बलीयसा ।
13cd आत्मक्षयकरं तस्मान्न विगृह्णीत दुर्बलः ॥ १२ ॥
14ab यां चेमां मन्यसे वीर गुहां दुर्गसमाश्रयां ।
14cd एषा लक्ष्मणबाणानामीषत्कार्या विदारणे ॥ १३ ॥
-15ab स्तोकं हि कृतमिन्द्रेण वज्रेणात्र विदारणं ।
16cd लक्ष्मणस्तु शितैर्बाणैर्भिन्द्यात् पत्रपुटं यथा ॥ १४ ॥
17ab एकैवेन्द्राशनिर्ज्ञेया यया दुर्गं विदारितं ।
17cd लक्ष्मणस्य तु नाराचा बहुशः सन्ति तादृशाः ॥ १५ ॥
18ab यदि कर्ता भवानेवं बिलेऽस्मिन्नभिसंश्रयं ।
18cd ततस्त्वां हरयः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥ १६ ॥
19ab स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः ।
19cd खेदिता दुःखिताश्चैव त्वां करिष्यन्ति पृष्ठतः ॥ १७ ॥
20ab स विहीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः ।
20cd तृणादपि भयोद्विग्नः स्पन्दमानस्त्रसिष्यसि ॥ १८ ॥
21ab न तु ज्ञातु न हिंस्युस्त्वां रामलक्ष्मणसायकाः ।
21cd अपवृत्ता महावेगा यदि त्वं नागमिष्यसि ॥ १९ ॥

22ab अस्माभिस्तु गतं सार्द्धं विनीतवदुपस्थितं ।

22cd आनुपूर्व्या स सुग्रीवो राज्ये त्वां स्थापयिष्यति ॥२०॥

23ab धर्मकामः पितृव्यस्ते धर्मात्मा संशितव्रतः ।

23cd शुचिः सत्यप्रतिज्ञश्च न स यातं न सान्त्वयेत् ॥२१॥

24ab प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितं ।

24cd तस्यापत्यं न चास्त्यन्यत् तस्मादङ्गद गम्यतां ॥२२॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे तारवाक्यं नाम
त्रिपञ्चाशः सर्गः — हनूमद्वाक्यं नाम
चतुःपञ्चाशः सर्गः ॥

b.E 47 = E.E LV.

1ab श्रुत्वा तु हनुमद्वाक्यं प्रसृतं धर्मसंहितं ।
1cd स्वामिसत्कारसंयुक्तमङ्गदः प्रत्युवाच ह ॥ १ ॥
2ab स्थैर्यं धर्मात्मता शौचमानृशंस्यमथार्जवं ।
2cd विक्रमश्चैव धैर्यं च सुग्रीवे नोपपद्यते ॥ २ ॥
3ab कथं स धर्मं जानाति भ्रातरं पूर्वजं हि यः ।
3cd अश्मभिः प्रत्यरौत्सीद्धि ह्यभानुपतने विले ॥ ३ ॥
4ab भ्रातुर्ज्येष्ठस्य यः क्रुद्धो जीवतो महिषीं प्रियां ।
4cd धर्मतो मातरमिव स्वीकरोति जुगुप्सितः ॥ ४ ॥
5ab सखा पाणिगृहीतश्च कृतकर्मा महायशाः ।
5cd न स्मृतो राघवो येन स कस्य सुकृतं स्मरेत् ॥ ५ ॥
6ab लक्ष्मणस्य भयाद्येन नाधर्मभयभीरुणा ।
6cd आरब्धा मार्गितुं सीता धर्मस्तत्र कथं भवेत् ॥ ६ ॥
7ab तस्मिन् पापे कृतघ्ने च स्मृतिहीने चलात्मनि ।
7cd विश्वसेत् कः पुमान् प्राज्ञस्तत्कुलीनो जिजीविषुः ॥ ७ ॥
9ab राजपुत्रं प्रतिष्ठाप्य सगुणं वापि निर्गुणं ।
9cd कथं शत्रुः कुलीनं मां सुग्रीवो जीवयिष्यति ॥ ८ ॥
10ab भिन्नमन्त्रो विरुद्धश्च हीनः शक्त्या कथं ह्यहं ।
10cd किष्किन्धां प्राप्य जीवेयं गतायुरिव सङ्गरं ॥ ९ ॥

11ab उपांशुदण्डेन हि मां बन्धनेनावसादयेत् ।
11cd शठः क्रूरः कृतघ्नश्च सुग्रीवो राज्यकारणात् ॥ १० ॥
12ab बन्धनान्मरणाच्छ्रेय इह प्रायोपवेशनं ।
12cd अनुजानीत मां सर्वे गृहान् गच्छत वानराः ॥ ११ ॥
13ab भवन्तः प्रतिगच्छन्तु न गमिष्याम्यहं पुनः ।
13cd इहैव प्रायमाशिष्ये श्रेयो मरणमेव मे ॥ १२ ॥
14ab अभिवादनपूर्वं तु सुग्रीवः प्लवगेश्वरः ।
14cd वाच्यस्ततो यवीयान् मे कुशलं वचनान्मम ॥ १३ ॥
15ab आरोग्यपूर्वं कुशलं वाच्या माता रुमा तथा ।
15cd मातरं चापि मे तारामाश्वासयितुमर्हथ ॥ १४ ॥
16ab प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी ।
17cd विनष्टं मामिह श्रुत्वा व्यक्तं त्यक्ष्यति जीवितं ॥ १५ ॥
18ab एतावदुक्त्वा वचनं वृद्धांस्तत्राभिवाद्य च ।
18cd संविवेशाङ्गदो भूमौ रुदन् दर्भेषु दुर्मनाः ॥ १६ ॥
19ab तस्य श्रुत्वा वचस्तत्र करुणं वानरर्षभाः ।
19cd नयनेभ्यस्तु ससृजुर्नेत्रजं वारि दुःखिताः ॥ १७ ॥
20ab सुग्रीवं चैव निन्दन्तः प्रशंसन्तश्च बालिनं ।
20cd परिवार्याङ्गदं सर्वे व्यवस्य प्रायमाशितुं ॥ १८ ॥
21ab तद्वाक्यं बालिपुत्रस्य विज्ञाय प्लवगर्षभाः ।
21cd उपस्पृश्योदकं सर्वे प्राङ्मुखाः समुपाविशन् ॥ १९ ॥

22ab दक्षिणाग्रेषु दर्भेषु कृत्वा चोत्तरतः शिरः ।
22ef तमेवानुमरिष्यन्तः सर्वे संविविशुर्भुवि ॥ २० ॥

स संविशद्भिर्बहुभिर्महीधरो
23ab महाद्रिशृङ्गप्रतिमैः प्लवङ्गमैः ।
बभूव संनादितनिर्झरान्तरो
23cd भृशं नदद्भिर्जलदैरिवाम्बरः ॥ २१ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे प्रायोपवेशनारम्भो
नाम पञ्चपञ्चाशः सर्गः ॥

L.E E.E
48 = LVI.

उपविष्टास्तु ते सर्वे तस्मिन् प्रायं धराधरे ।
हरयो गृध्रराजश्च तं देशं समुपास्थितः ॥ १ ॥
सम्पातिर्नाम नाम्ना तु दीर्घजीवी द्विजोत्तमः ।
जटायुषोऽग्रजो भ्राता प्रख्यातबलपौरुषः ॥ २ ॥
कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः ।
उपविष्टान् हरीन् दृष्ट्वा प्रीतो वचनमब्रवीत् ॥ ३ ॥
विधिः किल परे लोके विधानेनोपतिष्ठते ।
यथेदं विहितं भक्ष्यं चिरान्मे समुपस्थितं ॥ ४ ॥
वरं वराणां खादिष्ये वानराणां मृतं मृतं ।
एवमुक्त्वा तु सम्पाती तानवैक्षत वानरान् ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा गृध्रराजस्य दारुणं ।
अङ्गदः परमत्रस्तो हनूमन्तमुवाच ह ॥ ६ ॥
पश्य सीताप्रणाशेन साक्षाद्विवस्वतो यमः ।
इमं देशमनुप्राप्तो वानराणां विपत्तये ॥ ७ ॥
रामस्य न कृतं कार्यं न राज्ञो वचनं कृतं ।
हरीणामियमज्ञाता विपत्तिः समुपागता ॥ ८ ॥
वैदेह्यां क्रियमाणायां कृतं कर्म जटायुषा ।
गृध्रराज्ञा जनस्थाने श्रुतं वस्तन्न संशयः ॥ ९ ॥

11cd रावणेन नृशंसेन स वै प्राणैर्वियोजितः ।
12ab एवं सर्वाणि भुतानि तिर्यग्योनिगतान्यपि ॥ १० ॥
12cd प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान् वयं यथा ।
13ab राघवार्थे पराक्रान्तास्तदर्थे त्यक्तजीविताः ॥ ११ ॥
13cd कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीं ।
14ab सुखितो गृध्रराजस्तु रावणेन हतो रणे ॥ १२ ॥
14cd मुक्तश्च सुग्रीवभयाद्गतश्च गतिमुत्तमां ।
15ab पितुर्मम विनाशाय जहार जनकात्मजां ॥ १३ ॥
15cd राक्षसापसदः पापः पौलस्त्यकुलपांसनः ।
16ab मृतान् मृतान् नो गृध्रोऽयं भक्षयिष्यति वानरान् ॥ १४ ॥
जटायुषो बालिनश्च नाशाद्दशरथस्य च ।
18ab हरणे चापि वैदेह्याः संशयं वानरा गताः ॥ १५ ॥
19ab सुदुष्करं कृतं कर्म कैकेय्या धर्मगर्हितं ।
19cd यथा समस्तं निहतं कुलमात्मा यशो वयं ॥ १६ ॥
20ab कैकेय्या हि कृते पापे शोकेन स महाद्युतिः ।
20cd तथा क्षितिपतिः प्रेतः पुत्रं संप्रेष्य दण्डकं ॥ १७ ॥
21cd उपकारं तु कुर्वन्ति साधवः सज्जने सदा ।
22ab धन्यः स गृध्राधिपतिर्जटायुः परवीरहा ॥ १८ ॥
22cd यो राघवार्थे निहतो रावणेन पराक्रमात् ।
30ab एतच्छ्रुत्वा तु वचनमङ्गदस्य मुखाच्च्युतं ॥ १९ ॥

30cd भ्रातृस्नेहेन सम्पाती सहसा व्यथितोऽभवत् ।
31ab तांश्च प्रायमुपाविष्टांस्तदा गिरिवरे स्थितः ॥ २० ॥
31cd अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो दुरासदः ।
32ab जटायुषं को वदति प्राणैरिष्टतरं मम ॥ २१ ॥
33ab तदिच्छेयमहं श्रोतुं विनाशं वानरर्षभाः ।
33cd भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः ॥ २२ ॥
34ab कथं जटायुर्निहतः कश्च रामो जटायुषः ।
34cd कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः ॥ २३ ॥
35ab पूर्वजोऽहं जटायुर्मे यवीयान् हरिपुङ्गवाः ।
35cd हतः केन कथं कुत्र कस्माद्वा प्रायमास्यते ॥ २४ ॥
36ab यवीयसो गुणाढ्यस्य श्लाघनीयस्य विक्रमैः ।
36cd नामधेयमिदं भ्रातुश्चिराद्य मया श्रुतं ॥ २५ ॥
37cd तस्येष्टस्य मम भ्रातुः सखा दशरथो नृपः ।
38ab यस्य रामः प्रियः पुत्रो ज्येष्ठः श्रेष्ठश्च सद्गुणैः ॥ २६ ॥
38cd वनं प्रविष्टः स कथं सीतया सह भार्यया ।
39ab पृष्ठतोऽनुगतो भ्रात्रा लक्ष्मणेन च वीर्यवान् ॥ २७ ॥
39cd कथं चापि हृता सीता केन वा हरिपुङ्गवाः ।
40ab केन वा कारणेनैतत् सर्वमाख्यातुमर्हथ ॥ २८ ॥
40cd सूर्यांशुदग्धपक्षोऽहं न समर्थो विसर्पणे ।
41ab इच्छेयमस्माद्गिर्यग्राद्भवद्भिरवतारणं ॥ २९ ॥

## LVII.

शोकाकृष्टस्वरमपि श्रुत्वा ते हरियूथपाः ।
अद्दधुर्नैव तद्वाक्यं कर्मणा तेन शङ्किताः ॥ १ ॥
ते तु प्रायमुपाविष्टाश्चिन्तयन्तोऽवनीमुखाः ।
चक्रुर्बुद्धिमयं पापः सर्वान् नो भक्षयिष्यति ॥ २ ॥
सर्वथा प्रायमासीनान् यदि नो भक्षयिष्यति ।
कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः ॥ ३ ॥
एतां बुद्धिं तदा कृत्वा सर्वे वानरपुङ्गवाः ।
ततोऽवतारयामासुर्गिरिशृङ्गात् खगोत्तमं ॥ ४ ॥
अवतार्य ततश्चैनमङ्गदो वाक्यमब्रवीत् ।
प्राग् बभूवर्क्षराजो वै वानरेन्द्रः प्रतापवान् ॥ ५ ॥
ममार्यकः पक्षिवर धार्मिकः शुचिरात्मवान् ।
तस्यात्मजौ महात्मानौ बलवन्तौ बभूवतुः ॥ ६ ॥
बाली च हरिशार्दूलः सुग्रीवश्च परंतपः ।
लोके विश्रुतकर्माणौ राजा चासीत् पिता मम ॥ ७ ॥
राजा सर्वस्य लोकस्य क्षत्रियाणां महारथः ।
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकं वनं ॥ ८ ॥
लक्ष्मणेन सह भ्रात्रा सीतया चापि भार्यया ।
पितुर्निर्देशान्निष्क्रान्तो धर्मपन्थानमास्थितः ॥ ९ ॥

ब्राह्मणद्वेषिणा नित्यं सर्वपापातिसिद्धिना ।
तस्य भार्या जनस्थानाद्रावणेन हृता हलात् ॥ १० ॥
रामस्य च पितुर्मित्रं जटायुर्नाम धार्मिकः ।
ददर्श नीयमानां तां राक्षसेन स मैथिलीं ॥ ११ ॥
रावणं विरथं कृत्वा मोचयित्वा च मैथिलीं ।
परिश्रान्तश्च वृद्धश्च रावणेन ततो हतः ॥ १२ ॥
एवं गृध्रो हतस्तेन रावणेन बलीयसा ।
मित्रार्थमभिसंतप्तः परं पौरुषमास्थितः ॥ १३ ॥
सत्कृतश्चापि रामेण गतः स्वर्गं न संशयः ।
एवं रामप्रयुक्ताः स्मो मार्गमाणास्ततस्ततः ॥ १४ ॥
वैदेहीं नाधिगच्छामो निशि सूर्यप्रभामिव ।
एवमिक्ष्वाकुनाथस्य वसतः कानने प्रियां ॥ १५ ॥
जहार रावणो भार्यां हत्वा गृध्रं जटायुषं ।
तव भ्रातृनिहन्तारं रामभार्यापहारिणं ॥ १६ ॥
निहन्युः कपयः शीघ्रं जानीयुर्यदि यत्र सः ।
ततो मम पितृव्येण सुग्रीवेण महात्मना ॥ १७ ॥
चकार राघवः सख्यमबधीत् पितरं च मे ।
मम पित्रा विरुद्धं तु सुग्रीवं सचिवैः सह ॥ १८ ॥
निहत्य बालिनं रामस्ततस्तमभिषिक्तवान् ।
स राज्ये स्थापितस्तेन सुग्रीवो वानराधिपः ॥ १९ ॥

18cd राज्ञा वानरमुख्यानां येन प्रस्थापिता वयं ।
19ab ते वयं दण्डकारण्यं विचित्य सुसमाहिताः ॥ २० ॥
19cd अविज्ञानात् प्रविष्टाः स्म धरण्यां विवृतं विलं ।
20ab मयस्य मायाविहितं विलं तच्च विचिन्वतां ॥ २१ ॥
20cd व्यतीतस्तत्र नो मासो राज्ञा यः समयः कृतः ।
21ab तेन स्म कपिराजेन प्रेषिताः सर्वतो दिशं ॥ २२ ॥
21cd कृतां संस्थामतिक्रम्य भयेन प्रायमास्महे ।
22cd अस्मदीयैः शरीरैस्त्वं कुरु कार्यं यथेप्सितं ॥ २३ ॥
23ab सुग्रीवे हि भृशं क्रुद्धे राघवे लक्ष्मणे तथा ।
23cd हतानामपि सर्वेषां नास्ति किञ्चन जीवितं ॥ २४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे सम्पातिदर्शनं
नाम षट्पञ्चाशः सर्गः — अङ्गदवाक्यं
नाम सप्तपञ्चाशः सर्गः ॥

## LVIII.

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः ।
सवाष्पं वानरान् गृध्रः प्रत्युवाच महामतिः ॥ १ ॥
यवीयान् मम स भ्राता जटायुर्नाम वानराः ।
यमाख्यात हतं संख्ये रावणेन दुरात्मना ॥ २ ॥
वृद्धभावादपकृतं श्रवणात् तस्य मर्षये ।
न हि मे शक्तिरद्यास्ति भ्रातुर्बधविचारणे ॥ ३ ॥
पुरा वृत्रबधे वृत्ते स चाहं च जयैषिणौ ।
तरुणौ बलवन्तौ च सहर्षाद्गगनप्लुतौ ॥ ४ ॥
उदयाद्दुदितं दीप्तं ज्वालापिण्डसमप्रभं ।
आदित्यमनुसंयातौ ज्वलन्तं रश्मिमालिनं ॥ ५ ॥
अहं चैव जटायुश्च जवेनोत्पतितौ भृशं ।
मध्यं प्राप्ते ततः सूर्ये जटायुः सोऽवसीदत ॥ ६ ॥
तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितं ।
पक्षाभ्यां छादयां चक्रे स्नेहात् परमविह्वलः ॥ ७ ॥
निर्दग्धपक्षः पतितः पर्वतेऽस्मिन् पराजितः ।
अस्मिन् विन्ध्ये न तु भ्रातुः प्रवृत्तिमुपलक्षये ॥ ८ ॥
सुदीर्घस्याथ कालस्य प्रवृत्तिः कथिता हि नः ।
अब्रवीत् पुनरेवेदं वाष्पसंदिग्धया गिरा ॥ ९ ॥

न भयं कपिवीराणां विद्यते मत्सकाशतः ।
भ्रातुर्जटायुषो मृत्युं श्रुत्वा शोकेन विह्वलः ॥१०॥
युष्मान् समुपसर्पामि प्रवृत्त्यर्थं यवीयसः ।
तदेतदुपलब्धं मे तस्य वीरस्य नैधनं ॥११॥
10ab एवमुक्तो जटायोस्तु भ्रात्रा तत्त्वार्थदर्शिना ।
10cd युवराजोऽङ्गदो भूयः प्रोवाच वचनं हरिः ॥१२॥
11ab जटायुषः प्रियभ्रातुः श्रुतं ते ब्रुवतो मम ।
11cd आचक्ष्व यदि जानासि भवनं तस्य रक्षसः ॥१३॥
12ab अदीर्घदर्शिनं रौद्रं रावणं राक्षसाधमं ।
12cd इहाभ्यासे विदूरे वा यदि जानासि शंस नः ॥१४॥
13ab ततोऽब्रवीन्महातेजाः सम्पाती गृध्रसत्तमः ।
13cd आत्मानुरूपं वचनं वानरान् संप्रहर्षयन् ॥१५॥
14ab निर्दग्धपक्षो वृद्धोऽहं गतवीर्यश्च वानराः ।
14cd वाङ्मात्रेण तु रामस्य करिष्ये कार्यमुत्तमं ॥१६॥
जानामि गरुडाज्जातो विष्णोस्त्रीन् विक्रमानपि ।
महासुरविमर्दं च अमृतस्य च मन्थनं ॥१७॥
15ab रामस्य यदिदं कृत्यं कृत्यं तत् परमं मम ।
15cd जरया तु हृतं तेजः प्राणाश्च शिथिला मम ॥१८॥
16ab तरुणी रूपसंपन्ना वराभरणभूषिता ।
16cd ह्रियमाणा मया दृष्टा रावणेन दुरात्मना ॥१९॥

17ab क्रोशन्ती राम रामेति करुणं लक्ष्मणेति च ।
17cd भूषणान्यपविध्यन्ती गात्राणि च विधुन्वती ॥ २० ॥
18ab सूर्यप्रभेव शैलाग्रे तस्याः कौषेयमुत्तमं ।
18cd असितं राक्षसे भाति महामेघे यथा तडित् ॥ २१ ॥
19ab अहं तु सीतां तां मन्ये रामस्य परिकीर्त्तनात् ।
19cd श्रूयतां चापि वक्ष्यामि निलयं तस्य रक्षसः ॥ २२ ॥
20ab पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च ।
20cd अध्यास्ते नगरीं लङ्कां रावणो राक्षसाधिपः ॥ २३ ॥
21ab इतो द्वीपः समुद्रस्य समग्रे शतयोजने ।
21cd तस्मिन् लङ्का पुरी रम्या निर्मिता विश्वकर्मणा ॥ २४ ॥
22ab तस्यां वसति वैदेही दीना कौषेयवासिनी ।
22cd रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥ २५ ॥
23abd जनकस्य सुतां राज्ञस्तस्यां द्रक्ष्यथ मैथिलीं ।
23ab लङ्कायामभिगुप्तायां सागरेण समन्ततः ॥ २६ ॥
24ab संप्राप्य सागरस्यान्तं संपूर्णं शतयोजनं ।
25ab विक्रम्य दक्षिणं कूलं ततो द्रक्ष्यथ वानराः ॥ २७ ॥
25cd ते यूयं त्वरिताः सर्वे विक्रमध्वं प्लवङ्गमाः ।
26ab ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ ॥ २८ ॥
26cd आद्यः पन्थाः पतङ्गानां ये च धान्योपजीविनः ।
27ab द्वितीयो बलिभोक्तॄणां ये च पुष्पफले रताः ॥ २९ ॥

27cd भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैः सह ।
28ab श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमं ॥ ३० ॥
28cd बलवीर्योपपन्नानां रूपयौवनशालिनां ।
29ab षष्ठो मार्गस्तु हंसानां वैनतेयगतिः परा ॥ ३१ ॥
29cd वैनतेयाच्च नो जन्म पूर्वेषां वानरर्षभाः ।
30cd गर्हितं तु कृतं कर्म येन स्मः पिशिताशनाः ॥ ३२ ॥
31ab इहस्थोऽपि हि पश्यामि रावणं तां च मैथिलीं ।
31cd अस्माकं ह्यतिसौपर्णं दिव्यं चक्षुर्बलं महत् ॥ ३३ ॥
32ab तस्मादाहारलोभेन निसर्गेण च वानराः ।
32cd आयोजनशतात् साग्रात् पश्यामो वयमामिषं ॥ ३४ ॥
33ab अस्माकं विहिता दृष्टिर्निसर्गेण विदूरतः ।
33cd विहिता पादमूले तु वृत्तिश्चरणयोधिनां ॥ ३५ ॥
34ab उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः ।
34cd अधिगम्य च वैदेहीं समृद्धार्था भविष्यथ ॥ ३६ ॥
36ab भवद्भिर्नीतमिच्छामि आत्मानं वरुणालयं ।
36cd प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः ॥ ३७ ॥
37ab ते नीत्वा तु समं देशं तीरे नदनदीपतेः ।
37cd निर्दग्धपक्षं सम्पातिमवतार्याथ सागरं ॥ ३८ ॥
38ab प्रत्यानीय पुनश्चापि प्रत्यारोप्य कृतोदकं ।
38cd बभूवुर्वानरा हृष्टाः प्रवृत्तिमुपलभ्य ते ॥ ३९ ॥

Lo.E 52 = E.E LIX.

1ab ततः कृतोदकं स्नातं तं गृध्रं हरियूथपाः ।
1cd उपविष्टं गिरितटे परिवार्योपतस्थिरे ॥ १ ॥
2ab ततोऽङ्गदमुपासीनं निशम्य हरिभिर्वृतं ।
2cd जनितप्रत्ययो हर्षात् सम्पातिः पुनरब्रवीत् ॥ २ ॥
3ab कृत्वा निःशब्दमेकाग्राः शृणुत प्लवगर्षभाः ।
3cd तथ्यं संकीर्तयिष्यामि येन जानामि मैथिलीं ॥ ३ ॥
4ab अस्य विन्ध्यस्य शिखरे पुरास्मि पतितो दिवः ।
4cd दाहदुःखपरीताङ्गो निर्दग्धः सूर्यरश्मिभिः ॥ ४ ॥
5ab लब्धसंज्ञस्तु षड्रात्रात् सरुजो विह्वलन्निव ।
5cd वीक्षमाणो दिशः सर्वा नाभिजानामि तत्वतः ॥ ५ ॥
6ab अथेमान् सागरोद्देशान् नदीः शैलान् वनानि च ।
6cd सरांसि निर्झरांश्चैव पश्यतः स्मृतिराविशत् ॥ ६ ॥
7ab हृष्टपक्षिगणाकीर्णः कन्दरोदककूपवान् ।
7cd दक्षिणस्योदधेः कूले विन्ध्योऽयमिति मे मतिः ॥ ७ ॥
8ab अस्ति चात्राश्रमः पुण्यः सुरैरपि सुपूजितः ।
8cd ऋषिर्निशाकरो नाम तस्मिन्नुग्रतपा अभूत् ॥ ८ ॥
9ab अष्टौ वर्षसहस्राणि तेनास्मिन्नुषितं गिरौ ।
9cd स्वर्गतस्य शतं त्वेकं द्वे शते वसतो मम ॥ ९ ॥

10cd अवतीर्य च शैलाग्रात् कृच्छ्रेण विषमाच्छनैः ।
10ef तीक्ष्णदर्भां वसुमतीं विचरामि सुदुःखितः ॥ १० ॥
11ab तमृषिं द्रष्टुकामोऽस्मि प्रयत्नं कृतवान् भृशं ।
11cd जटायुषा मया पूर्वं बहुशोऽभिगतो हि सः ॥ ११ ॥
12ab अभ्यासे चाश्रमात् पुण्याद्ववुर्वाताः सुगन्धिनः ।
12cd वृक्षो नापुष्पितः कश्चिदफलो वात्र दृश्यते ॥ १२ ॥
13ab उत्पत्य चाश्रमद्वारि वृक्षमूलमुपाश्रितः ।
13cd द्रष्टुकामः प्रतीक्षे तं भगवन्तं निशाकरं ॥ १३ ॥
14ab अथ पश्यामि दूरस्थमृषिं ज्वलिततेजसं ।
14cd कृताभिषेकं दुर्धर्षमुपावृत्तमुपान्तिकात् ॥ १४ ॥
15ab तमृक्षाः सृमरा व्याघ्राः सिंहा नागाः सरीसृपाः ।
15cd परिवार्यानुगच्छन्ति धातारमिव देहिनः ॥ १५ ॥
16ab संप्राप्तं तमृषिं दृष्ट्वा दिग्भ्यस्ते प्रययुस्ततः ।
प्रविष्टस्येव भवनं राज्ञः सामात्यकं बलं ॥ १६ ॥
17ab ऋषिर्दृष्ट्वा तु मां तूर्णीं प्रविवेशाश्रमं प्रभुः ।
17cd स मुहूर्त्ताद्विनिष्क्रम्य ततः कार्यं स पृष्टवान् ॥ १७ ॥
वर्णविवर्णमालोक्य पक्षयोश्च पराजयं ।
नाभिजानामि पूर्वं त्वां पश्चात् स्मृत्वाहमागतः ॥ १८ ॥
18ab तव विह्वलतां दृष्ट्वा रोम्णां न ज्ञातवानहं ।
18cd अग्निदग्धाविमौ पक्षौ शरीरं च व्रणावृतं ॥ १९ ॥

19ab गृध्रौ द्वौ दृष्टपूर्वौ मे वायुवेगसमौ जवे ।
19cd गृध्राणां चैव राजानौ भ्रातरौ कालरूपिणौ ॥ २० ॥
20ab तयोर्ज्येष्ठश्च सम्पाती जटायुरनुजश्च हे ।
20cd मानुषं रूपमास्थाय पादौ जगृहतुर्मम ॥ २१ ॥
21ab तयोस्तुल्यं न पश्यामि रूपेण च बलेन च ।
21cd विचित्य च जगत् कृत्स्नं तयोस्तुल्यो न विद्यते ॥ २२ ॥
22ef कस्ते व्याधिः समुत्पन्नः पक्षयोः पतनं कथं ।
23ab दण्डो वा पातितः केन तथ्यमिच्छामि वेदितुं ॥ २३ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे वार्त्तोपलब्धिर्नाम
अष्टापञ्चाशः सर्गः — निशाकरमुनिसंकीर्तनं
नाम नवपञ्चाशः सर्गः ॥

53 = LX.

1ab एवमुक्तस्त्वहं तेन तदा धर्मात्मना वचः ।
1cd अनुजं संस्मरन् किञ्चिद्वाष्पपूर्णमुखोऽभवं ॥ १ ॥
धारयित्वाश्रुवेगं तु भ्रातृस्नेहादुपस्थितं ।
3cd निवेदयामास तदा महर्षिं संकृताञ्जलिः ॥ २ ॥
4ab भगवन् प्रतिरुद्धत्वाल्लज्जया चापि नामितः ।
4cd तद्व्याहर्तुं न शक्नोमि मुखं वाष्पो रुणद्धि मे ॥ ३ ॥
5ab सम्पातिनं मां भगवन् विद्धि दुष्कृतकारिणं ।
5cd भ्रातरं ज्येष्ठमिष्टस्य वीरस्य च जटायुषः ॥ ४ ॥
7cd कारणं चाभिधास्यामि येन पक्षाविमौ मम ।
8ab निर्दग्धौ च विरूपौ च भगवन् श्रोतुमर्हसि ॥ ५ ॥
8cd अहं चैव जटायुश्च संहृष्टौ दर्पमोहितौ ।
9ab वीर्यादुत्पतितौ वेगाज्जिज्ञासन्तौ परां गतिं ॥ ६ ॥
10cd विन्ध्यस्याग्रे पणं कृत्वा मुनीनामग्रतः पुरा ।
10ab पणेषु राज्यमुद्दिश्य कालस्य वशमागतौ ॥ ७ ॥
11ab रविरद्यानुयातव्यो यावदस्तमथोदयं ।
11cd अथ वायुपथं प्राप्य पश्यावः पृथिवीतले ॥ ८ ॥
12ab रथचक्रप्रमाणानि नगराणि क्वचित् क्वचित् ।
12cd क्वचिद्वादित्रनिर्घोषान् ब्रह्मघोषान् क्वचित् क्वचित् ॥ ९ ॥

16cd तथैवाप्सरसो बह्वीः पश्यावो मृष्टकुण्डलाः ।
9cd जिज्ञासन्तावुभौ वीर्यमन्योन्यस्यान्तरैषिणौ ॥ १० ॥
17ab तूर्णमुत्पत्य चाकाशमादित्यपथमास्थितौ ।
17cd आवमालोकयन्तौ तु वेगमुत्तममागतौ ॥ ११ ॥
18ab पृथिवी च तदा मन्ये नवशाद्वलशोभिता ।
18cd उत्पलैरिव संछन्ना दृश्यते स्म शिलोच्चयैः ॥ १२ ॥
आपगाश्च प्रदृश्यन्ते लाङ्गलस्य गतिर्यथा ।
19ab हिमवांश्चैव विन्ध्यश्च मेरुश्चाप्यर्णवावृताः ॥ १३ ॥
19cd भूतले संप्रकाशन्ते नागा इव शिलातले ।
20ab तीव्रः खेदश्च दाहश्च तदा ग्लानिश्च या परा ॥ १४ ॥
21ab समाविवेश मोहश्च भयं चासीत् तदावयोः ।
21cd दिग् न विज्ञायते पूर्वा न कौबेरी न पश्चिमा ॥ १५ ॥
21ef न याम्या नापि विदिशः काश्चिदर्कप्रतापिताः ।
22ab युगान्तनियते काले पावकेन यथा भवेत् ॥ १६ ॥
22cd अग्निराशिरिवाकाशे भास्करः सर्वलोकहितः ।
22ef अप्रमेयवपुस्तस्य नातिव्यक्तं प्रकाशते ॥ १७ ॥
23ab यत्नेन महता व्योम्नि मया समवलोकितः ।
23cd तुल्यः पृथ्वीप्रमाणेन भास्करः प्रतिभाति मे ॥ १८ ॥
24ab जटायुर्मामनादृत्य पपातावाङ्मुखस्तदा ।
24cd तं दृष्ट्वा तूर्णमाकाशादात्मानं मुक्तवानहं ॥ १९ ॥

25ab पक्षाभ्यां च मया गुप्तो जटायुर्न व्यदह्यत ।
25cd पश्चाहं भृशनिर्दग्धोऽपतं वायुपथाच्च्युतः ॥ २० ॥
26ab अहं तु पतितो विन्ध्ये दग्धपक्षो जडीकृतः ।
26cd अश्रौषं पतितं चाहं जनस्थाने जटायुषं ॥ २१ ॥
27ab पुण्यानामवशेषेण निमग्नो नास्मि सागरे ।
27cd आकाशे वा मृतो नास्मि विषमे वा शिलोच्चये ॥ २२ ॥
28ab राज्येन हीनो भ्रात्रा च पक्षाभ्यां विक्रमेण च ।
28cd सर्वथा मर्तुमिच्छामि पतिष्यामि गिरेस्तटात् ॥ २३ ॥
29ab को हि मे जीवितेनार्थो विपक्षस्याद्य पक्षिणः ।
29cd परैः संचरमाणस्य काष्ठलोष्टसधर्मिणः ॥ २४ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे सम्पातिवाक्यं
नाम षष्टितमः सर्गः ॥

L.E E.E
51 + 54 = LXI.

IV. 54.
1ab एवमुक्त्वा मुनिश्रेष्ठं प्ररुदन् दुःखितो भृशं ।
1cd असृजं नेत्रजं वारि गिरिः प्रस्रवणादिव ॥ १ ॥
2ab मां तु बाष्पमुखं दृष्ट्वा महर्षिः करुणान्वितः ।
2cd अथ ध्यात्वा मुहूर्त्तं मां भगवानिदमब्रवीत् ॥ २ ॥
3ab पक्षौ तु ते पक्षिपते पुनरन्यौ भविष्यतः ।
3cd चक्षुषी प्राणबुद्धिश्च विक्रमश्च बलं च ते ॥ ३ ॥
4ab पुराणे तु महत् कृत्यं त्वया कार्यं श्रुतं मया ।
4cd दृष्टं मे तपसा चैव सत्यमेतन्निबोध मे ॥ ४ ॥
5ab राजा दशरथो नाम कश्चिदिक्ष्वाकुनन्दनः ।
5cd तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥ ५ ॥
6ab अरण्यं भार्यया सार्द्धं भ्रात्रा चैव गमिष्यति ।
6cd कस्मिंश्चिदर्थे पित्रा स नियुक्तः सत्यविक्रमः ॥ ६ ॥
7ab तस्य वै रावणो नाम भार्यामपहरिष्यति ।
7cd राक्षसेन्द्रो जनस्थानादबध्यः सुरदानवैः ॥ ७ ॥
8ab प्रलोभ्यमाना सा कामैर्वरैस्तैस्तैश्च मैथिली ।
8cd याच्यमाना सती तत्र दुःखमग्ना न भोक्ष्यति ॥ ८ ॥
9ab वरमन्नं च वैदेह्या ज्ञात्वा दास्यति वासवः ।
9cd यदन्नममृतप्रख्यं सुराणामपि दुर्लभं ॥ ९ ॥

– 10ab तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदं विति ।
अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥ १० ॥
11ab यदि जीवति मे भर्ता देवरो वा स लक्ष्मणः ।
11cd इह वा प्रेतलोके वा तयोः स्यादिदमक्षयं ॥ ११ ॥
12ab एष्यन्त्यन्वेषकास्तस्या रामदूताः प्लवङ्गमाः ।
12cd आख्येया राममहिषी तेभ्यस्ते जनकात्मजा ॥ १२ ॥
13ab सर्वथा नैव गन्तव्यमीदृशः क्व गमिष्यसि ।
13cd एवं कालं प्रतीक्षस्व पक्षौ हि प्रतिलप्स्यसे ॥ १३ ॥
14ab उत्सहेयं तवाद्यैव पक्षौ कर्तुं यथा पुरा ।
14cd इहस्थस्त्वं तु लोकानां महत् कार्यं करिष्यसि ॥ १४ ॥
15ab तवापि खलु तत् कार्यं तयोश्च नृपपुत्रयोः ।
15cd ब्राह्मणानां मुनीनां च देवानां वासवस्य च ॥ १५ ॥
16ab इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ ।
16cd न चिरं जीवितव्यं स्यादतस्त्यक्ष्ये कलेवरं ॥ १६ ॥
17ab एतैश्चान्यैश्च बहुभिर्वाक्यैर्धर्मार्थसंहितैः ।
17cd मामाश्वास्याभ्यनुज्ञाय प्रविवेशाश्रमं मुनिः ॥ १७ ॥
18ab ऋषेश्चाहं वचः कुर्वन् द्रष्टुकामश्च राघवं ।
18cd अतो दुःखसमाविष्टो न त्यजामि कलेवरं ॥ १८ ॥
19ab कन्दराद्विनिःसृत्याहं विचरन् वै शनैः शनैः ।
20ab इममद्रिं समारुह्य भवतः प्रतिपालये ॥ १९ ॥

21ab अद्य त्वेतस्य कालस्य साग्रं वर्षशतत्रयं ।
21cd देशकालप्रतीक्षोऽस्मि हृदि कृत्वा मुनेर्वचः ॥ २० ॥
22ab महाप्रस्थानमासाद्य स्वर्गते तु निशाकरे ।
22cd स मां दहति संतापो वितर्कैर्बहुभिर्वृतं ॥ २१ ॥
23ab उत्थितां महतीं बुद्धिं मरणे संहराम्यहं ।
23cd श्रुतैस्तैः शमयन् वाक्यैरग्निमम्बुघटैरिव ॥ २२ ॥
24cd सत्यार्था निश्चिता बुद्धिर्धर्मार्थे वानरर्षभाः ।
सा मे विनयते दुःखं दीपस्येव शिखा तमः ॥ २३ ॥
25cd भक्ष्यैस्तु विविधैस्तैस्तैः पुत्रो मामिह पुष्यति ।
एकं कालं जनन्यर्थे हिमवन्तं जगाम सः ॥ २४ ॥
Pr. 51.
24ab पक्षाभ्यामावृतस्तेन रावणो मैथिलीं हरन् ।
24cd संप्रधार्य ममावस्थां धर्मापेक्षी न युद्धवान् ॥ २५ ॥
25ab जानता तु मया वीर्यं रावणस्य दुरात्मनः ।
25cd पुत्रः संतर्जितो वाग्भिर्न त्राता मैथिली कथं ॥ २६ ॥
26ab तस्या विलपितं श्रुत्वा तौ च सीताविनाकृतौ ।
26cd न मे दशरथस्नेहात् पुत्रेणोत्पादितं प्रियं ॥ २७ ॥
1ab इत्येवममृतास्वादं गृध्रराजसमीरितं ।
1cd निशम्य वचनं हृष्टास्ते भूयः प्लवगर्षभाः ॥ २८ ॥
2ab जाम्बवांश्च हरिश्रेष्ठः सह सर्वैः प्लवङ्गमैः ।
2cd भूतलात् सहसोत्पत्य गृध्रराजमथाब्रवीत् ॥ २९ ॥

3 ab कथं पुत्रेण ते दृष्टा ह्रियमाणायतेक्षणा ।
3 cd सर्वमाख्याहि भद्रं ते गतिर्भव वनौकसां ॥ ३० ॥
5 cd स हरीन् प्रतिसंहृष्टान् सीताश्रुतिसमाहितान् ।
6 ab पुनराश्वासयत् पक्षी वचनं चाब्रवीदिदं ॥ ३१ ॥
6 cd श्रूयतां हन्त वैदेह्या यथा मे हरणं श्रुतं ।
7 ab पुत्रेण हीदमाख्यातं महावीर्येण धीमता ॥ ३२ ॥
7 cd अहमस्मिन् गिरौ दुर्गे योजनायतविस्तरे ।
8 ab चिरात् प्रपतितो वृद्धः क्षीणवीर्यपराक्रमः ॥ ३३ ॥
9 ab स मां गुरुहितः पुत्रः सुपार्श्वस्तु गुणान्वितः ।
9 cd आहारेण यथाकालं प्रीणाति पततां वरः ॥ ३४ ॥
तीक्ष्णकोपास्तु गन्धर्वास्तीक्ष्णकोपा भुजङ्गमाः ।
मृगाणां च भयं तीक्ष्णमस्माकं क्षुद्भयं तथा ॥ ३५ ॥
10 ab स कदाचित् क्षुधार्त्तस्य ममाहाराभिकाङ्क्षिणः ।
10 cd गतसूर्येऽहनि प्राप्तो मम पुत्रो निरामिषः ॥ ३६ ॥
11 ab स मया क्रुद्धभावेन कोपाच्च परिभर्त्सितः ।
11 cd क्षुत्पिपासाभिभूतेन कुमारः पतगोत्तमः ॥ ३७ ॥
12 ab स ममाहारसंरोधात् पीडितः प्रीतिवर्धनः ।
12 cd अनुमान्य यथातथ्यमिदं वचनमब्रवीत् ॥ ३८ ॥
13 ab अहं तात यथाकालमाहारार्थी खमुत्प्लुतः ।
13 cd महेन्द्रस्य गिरेर्द्वारं महदावृत्य विष्ठितः ॥ ३९ ॥

14ab स हि सत्त्वसहस्राणां नगराद्वनचारिणां ।
14cd एको व्यवस्थितः पन्था महेन्द्रगिरिवासिनां ॥४०॥
16ab तत्र कश्चिन्मया दृष्टः सूर्योदयसमप्रभः ।
16cd खमावृत्याभिधावंश्च स्त्रियमाहृत्य वीर्यवान् ॥४१॥
17ab सोऽहमभ्यवहारार्थी तौ दृष्ट्वा कृतनिश्चयः ।
17cd तेन साम्ना विनीतेन पन्थानमहमर्थितः ॥४२॥
18ab न च सामोपपन्नानां प्रहर्ता भुवि विद्यते ।
18cd नीचेनापि महाप्राज्ञ किं पुनर्मद्विधेन वै ॥४३॥
स यातस्तेजसा व्योम संक्षिपन्निव वेगितः ।
अथाहं खे चरैर्भूतैरभिगम्य सभाजितः ॥४४॥
दिष्ट्या जीवसि वत्सेति मां ब्रुवंश्च महर्षयः ।
केवलं सकलत्रोऽसौ तेन स्वस्ति न संशयः ॥४५॥
कथञ्चिद्बालभावात् तु न हतस्त्वं खगोत्तम ।
एष वै रावणो नाम देवदानवमर्दनः ॥४६॥
अटन् पर्येति पृथिवीं वरदानेन दर्पितः ।
एवमुक्तस्ततोऽहं तैस्तपःसिद्धैर्महर्षिभिः ॥४७॥
20cd न च मां रक्षसां राजा रावणः प्रतिचोदितः ।
21ab हरन् दाशरथेर्भार्यां रामस्य जनकात्मजां ॥४८॥
21cd भ्रष्टाभरणकौषेयां शोकमोहपरायणां ।
21ef रामलक्ष्मणयोर्नाम क्रोशन्तीं मुक्तमूर्द्धजां ॥४९॥

22ab एवं कालात्ययस्तात इति कालविदां वर ।
22cd एतमर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत् ॥५०॥
23ab एतच्छ्रुत्वा न मे काचिद्बुद्धिरासीत् पराक्रमे ।
23cd अपक्षो हि कथं पक्षी कर्म किञ्चित् समाचरेत् ॥५१॥
यत् तु शक्यं मया कर्तुमपि षड्गुणवर्तिना ।
31ab वाङ्मात्रेण समर्थोऽहं साहाय्ये वानरर्षभाः ॥५२॥
30cd श्रूयतां चाभिधास्यामि भवतां पौरुषाश्रयं ।
31cd यच्च दाशरथेर्दुःखं मम तन्नास्ति संशयः ॥५३॥
32ab भवन्तो हि मतिश्रेष्ठा मतिमन्तो यशस्विनः ।
32cd सहिताः कपिराजेन देवैरपि दुरासदाः ॥५४॥
33ab रामलक्ष्मणबाणाश्च निशिताः कङ्कपत्रिणः ।
33cd त्रयाणामपि लोकानां समर्थास्त्राणनिग्रहे ॥५५॥
34ab कामं खलु दशग्रीवस्तेजोबलसमन्वितः ।
34cd भवतां तु समग्राणां न किञ्चित् कर्म दुष्करं ॥५६॥
35ab तदलं कालहान्या तु क्रियतां बुद्धिनिश्चयः ।
35cd न हि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥५७॥
36ab न हीदमनुरूपं वो भूमौ प्रायोपवेशनं ।
36cd सत्त्वविक्रमगाम्भीर्यबलयौवनशालिनां ॥५८॥
37ab उत्तिष्ठध्वं न युक्तं हि त्यक्तुं कार्यमनुष्ठितं ।
37cd कृते पुरुषकारे हि मरणं नाभिबाधते ॥५९॥

## LXII.

एवं कथयतस्तस्य सम्पातेः सुमहात्मनः ।
उवाच जाम्बवान् वीरस्तत्कालसदृशं वचः ॥ १ ॥
सर्वं साधु सुयुक्तं च भवानर्थं प्रभाषते ।
वृद्धभावानुरूपं च हितं रघुकुलस्य च ॥ २ ॥
अस्माकं तु विचिन्त्येयं कथं सागरलङ्घनं ।
भवेदिति महाप्राज्ञ तेन स्मो व्याकुलीकृताः ॥ ३ ॥
तत्र नो गतिसाहाय्यं भवान् वै दातुमर्हति ।
परं पारं समुद्रस्य यथा नो गमनं भवेत् ॥ ४ ॥
तमेवं भाषमाणं तु युक्तमित्यङ्गदोऽब्रवीत् ।
अथाङ्गदमुवाचेदं सम्पाती मधुरं वचः ॥ ५ ॥
न मे दाशरथेः स्नेहादकार्यमिह विद्यते ।
किं करिष्याम्यशक्तस्तु प्लवने प्लवतां वर ॥ ६ ॥
तदैव हि दुरात्मासौ रावणः स्पर्धितो मया ।
यदि पक्षौ न दग्धौ मे भवेतां सूर्यतेजसा ॥ ७ ॥
मामासाद्य हि संक्रुद्धं समरे राक्षसाधमः ।
न जीवेदिति बुद्धिर्मे तत्त्वमेतद्ब्रवीमि ते ॥ ८ ॥
सोऽहं वृद्धः कपिश्रेष्ठ न च शक्तः पराक्रमे ।
लङ्कां नेतुं न शक्नोमि स्वयं त्वां प्लवगेश्वर ॥ ९ ॥

L.E 55 = LXIII.

एवं कथयतस्तस्य पतगस्य महात्मनः ।
उत्पेततुस्तदा पक्षौ समक्षं वनचारिणां ॥ १ ॥
स दृष्ट्वा स्वां तनुं पक्षैरुद्गतैश्च तनुच्छदैः ।
प्रहर्षमतुलं लेभे सपुत्रः स महाबलः ॥ २ ॥
युवराजोऽङ्गदश्चैव जाम्बवांश्चर्क्षपार्थिवः ।
नलो नीलो गयो मैन्दो द्विविदो गवयस्तथा ॥ ३ ॥
तारो गवाक्षः कुमुदः शरभः पनसो हरिः ।
हनूमान् क्रथनश्चैव परं हर्षमुपागमन् ॥ ४ ॥
ऊचुश्च राममाहात्म्यं महावीर्यं च लक्ष्मणां ।
ययोः प्रभावात् सम्पातिरपक्षः पक्षवानभूत् ॥ ५ ॥
अशरीरा ततो वाणी दिव्या प्रादुरभूत् तदा ।
एवमेतद्धरिश्रेष्ठाः प्रभाषध्वं यथावचः ॥ ६ ॥
ततः प्रहृष्टः सम्पाती वानरानिदमब्रवीत् ।
हर्षविस्तीर्णया वाचा स्वरसंपत्प्रसक्तया ॥ ७ ॥
निशाकरस्य विप्रर्षेः प्रभावात् सुमहात्मनः ।
समुत्थिताविमौ पक्षौ सर्वे पश्यन्तु वानराः ॥ ८ ॥
इत्युक्त्वा वानरान् सर्वान् सम्पाती खचरेश्वरः ।
उत्पपात गिरेः शृङ्गाज्जिज्ञासन्नात्मनो गतिं ॥ ९ ॥

5ab ततस्तु वानराः सर्वे विस्मयोत्फुल्ललोचनाः ।
5cd पर्वताग्रमवेक्षन्त सम्पातिगमनं महत् ॥१०॥
6ab शिखरस्थस्तु सम्पाती पुनस्तानिदमब्रवीत् ।
6cd हर्षविस्तीर्णया वाचा स्वरसंपत्प्रयुक्तया ॥११॥
7ab निशाकरस्य तस्यर्षेः सर्वे पश्यत वानराः ।
7cd सम्यक् तप्तस्य तपसः प्रभावमिममीदृशं ॥१२॥
8ab आदित्यरश्मिनिर्दग्धौ पक्षावगमनक्षमौ ।
8cd संवृत्तौ तत्प्रभावेन क्षणेन गमनक्षमौ ॥१३॥
9ab यौवने वर्तमानस्य ममासीद्यः पराक्रमः ।
9cd तमेवाद्याधिगच्छामि बलं पौराणमात्मनः ॥१४॥
10ab सर्वथा क्रियतां यत्नः सीतामधिगमिष्यथ ।
10cd पक्षलम्भो ममायं वः प्रत्यक्षं संनिदर्शितः ॥१५॥
11ab क्रोशमात्रमितो गत्वा दक्षिणस्योत्तरं गिरिं ।
11cd शतयोजनविस्तीर्णं लङ्घयित्वा महोदधिं ॥१६॥
12ab तत्र त्रिकूटशिखरे रक्षितां रावणेन यां ।
12cd लङ्कां द्रक्ष्यथ दुर्धर्षां निहिता यत्र मैथिली ॥१७॥
13ab रक्ष्यमाणा सुघोराभी राक्षसीभिः समन्ततः ।
13cd निर्भर्त्स्यमाना बहुशस्तस्य रौद्रस्य शासनात् ॥१८॥
14ab कृतार्थाश्च प्रतीताश्च दृष्ट्वा सीतां तपस्विनीं ।
14cd धर्षयित्वा पुरीं लङ्कां पुनरेष्यथ वानराः ॥१९॥

15ab न खल्वस्ति बलं किञ्चिन्मम ज्ञातुमनागतं ।
15cd अनुभावात् तु जानामि महर्षेर्भावितात्मनः ॥२०॥
16ab हिमवन्तं गमिष्यामि शङ्करश्वशुरं गिरिं ।
16cd यत्र मे दयिता भार्या तनयाश्च कृतालयाः ॥२१॥
17ab विशालशिखरः प्रांशुर्मलयस्याविदूरतः ।
17cd वानरा गम्यतामेष दक्षिणस्योत्तरो गिरिः ॥२२॥
18ab यः शक्तो योजनशतं निरालम्बमपर्वतं ।
18cd क्रमितुं वानरः शूरः सर्वैः स विनियुज्यतां ॥२३॥
एवमुक्त्वा तु सम्पाती तानामन्त्र्य प्लवङ्गमान् ।
जगामाकाशमाविश्य सुपर्ण इव वेगितः ॥२४॥
प्रोड्डीनं तु खगं दृष्ट्वा प्रहृष्टान् वानरर्षभान् ।
इदं हृष्टतमो भूत्वा बालिपुत्रोऽङ्गदोऽब्रवीत् ॥२५॥
दत्त्वा प्रवृत्तिं वैदेह्या जीवयित्वा च वानरान् ।
गतः स्वं निलयं पक्षी सम्पाती हृष्टमानसः ॥२६॥
तदागच्छत गच्छाम दक्षिणस्योत्तरं गिरिं ।
तत्रस्थाश्चिन्तयिष्यामो लङ्घनं वै महोदधेः ॥२७॥

ततस्तथेति प्रवदन्तमङ्गदं
प्रहर्षयुक्ता अवदन् महाबलाः ।
स चान्वितो ज्ञातिबलेन सत्वरो
जगाम तं गृध्रनिवेदितं गिरिं ॥२८॥

अथ पवनसमानविक्रमाः
प्लवङ्गमाः परिपूर्णमानसाः ।
त्वरितमभिमतां दिशं ययुस्ते
कृतमतयः पितृराजरक्षितां ॥ २१ ॥ —

इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्र्यां संहितायाम्
किष्किन्धाकाण्डे सम्पातिपक्षोद्गमनं नाम
त्रिषष्टितमः सर्गः ॥

किष्किन्धाकाण्डं समाप्तं ॥

# अथ
# श्रीरामायणे वाल्मीकीये
# सुन्दरकाण्डं

A.E IV.56. = E.E I.

1ab आख्याते गृध्रराजेन समुत्पत्य प्लवङ्गमाः ।
1cd सहिताः प्रीतिसंहृष्टाः सिंहनादं विनेदिरे ॥ १ ॥
ते तु गत्वा समुद्रस्य दक्षिणस्योत्तरं गिरिं ।
समुद्रं ददृशुर्भीमं तिमिनक्रसमाकुलं ॥ २ ॥
तं समुद्रं समालोक्य वानरा भीमविक्रमाः ।
सर्वलोकस्य महतः प्रतिविम्बमिवार्णवं ॥ ३ ॥
4ab सत्त्वैर्महद्भिर्विकृतैः क्रीडद्भिर्बहुभिर्जले ।
4cd व्यादितास्यैर्महाकायैरूर्मिभिश्च समावृतं ॥ ४ ॥
5ab प्रसुप्तमिव चान्यत्र क्रीडन्तमिव कुत्रचित् ।
5cd क्वचित् पर्वतमात्रैश्च जलराशिभिरुच्छ्रितैः ॥ ५ ॥
6ab संकुलं दानवेन्द्रैश्च पातालतलवासिभिः ।
6cd लोमहर्षणमक्षोभ्यं दृष्ट्वा ते सागरं तदा ॥ ६ ॥

दक्षिणस्य समुद्रस्य तीरमुत्तरमागताः ।
संनिवेशं ततश्चक्रुः सर्वे ते हरियूथपाः ॥ ७ ॥
7ab आकाशमिव निष्पारं दृष्ट्वा ते सागरं ततः ।
7cd निषेदुः कपयः केचित् केचिज्जह्रषिरे मुदा ॥ ८ ॥
8ab विषण्णवदनान् दृष्ट्वा तत्र कांश्चित् प्लवङ्गमान् ।
8cd आश्वासनार्थं तेजस्वी तारियो वाक्यमब्रवीत् ॥ ९ ॥
अनुमान्य हरीन् वृद्धानितराननुशास्य च ।
उवाच मा पुनर्भैष्ट कृतकृत्या दृढं वयं ॥ १० ॥
17ab निशां तावदिमां सर्वे वसन्तु विगतज्वराः ।
17cd श्वः प्रभाते करिष्यामो यन्नः श्रेयो भविष्यति ॥ ११ ॥
18ab अथ रात्र्यां व्यतीतायामङ्गदो हरियूथपः ।
18cd सह तैर्वानरैः सर्वैर्निषसाद गिरेस्तटे ॥ १२ ॥
11ab सा वानराणां ध्वजिनी परिवार्याङ्गदं बभौ ।
11cd वासवं परिवार्येव वाहिनी मरुतां यथा ॥ १३ ॥
15cd कोऽन्यस्तां वानरीं सेनां शक्तः स्तम्भयितुं भवेत् ।
16ab अङ्गदाद्द्विविदान्मैन्दादन्यतो वा हनूमतः ॥ १४ ॥
12ab तान् विषादेन महता सहसाभिपरिप्लुतान् ।
12cd बालिपुत्रोऽङ्गदो धीमानिदं वचनमब्रवीत् ॥ १५ ॥
न विषादं महावीर्याः कर्तुमर्हथ वानराः ।
विषण्णो हि जनः शक्तो न भवत्यर्थसाधकः ॥ १६ ॥

यो विषादं प्रसहते विषमे समुपस्थिते ।
तेजसा तस्य युक्तस्य पुरुषार्थो न रिच्यते ॥ १७ ॥
न विषादे मनः कार्यं विषादो विषमुत्तमं ।
मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः ॥ १८ ॥
को योजनशतं साग्रं लङ्घयेत प्लवङ्गमाः ।
क इमान् वानरान् सर्वान् मोक्षयेद्वधबन्धनात् ॥ १९ ॥
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयम्भुवः ।
विक्रम्य सहसा हस्तादमृतं स इहानयेत् ॥ २० ॥
चन्द्रादपि हरेल्लक्ष्मीं तेजो वा रविमण्डलात् ।
लङ्कामितो विक्रमेण गच्छेद्य इति मे मतिः ॥ २१ ॥
विक्रम्य य इतो लङ्कां गत्वा तु पुनराव्रजेत् ।
बुद्धा बुद्धा समाख्यातु यस्य या परमा गतिः ॥ २२ ॥
यस्य प्रसादात् पुत्रांश्च दारांश्चैव धनानि च ।
इतो निवृत्ताः पश्येम सिद्धार्थाः सुखिनो वयं ॥ २३ ॥
कस्य प्रसादाद्रामं च लक्ष्मणं च महाबलं ।
अभिगच्छेम संहृष्टाः सुग्रीवं च कपीश्वरं ॥ २४ ॥
यदि कश्चित् समर्थो वः सागरप्लवने हरिः ।
स ददातु जनस्यास्य पुण्यामभयदक्षिणां ॥ २५ ॥
अङ्गदस्य वचः श्रुत्वा न किञ्चित् कश्चिदब्रवीत् ।
तिमिताश्चाभवन् सर्वे तत्र ते हरियूथपाः ॥ २६ ॥

अथ तांस्तिमितान् दृष्ट्वा स्विन्नगात्रान् व्यवस्थितान् ।
अङ्गदो हरिशार्दूलः पुनर्वचनमब्रवीत् ॥ २७ ॥
15ab वानराः क इदानीं वो लङ्घयिष्यति सागरं ।
कः करिष्यति रामस्य नृपस्य प्रियमुत्तमं ॥ २८ ॥
21ab क इमान् वानरान् सर्वान् प्राणसंशयमागतान् ।
21cd मोक्षयिष्यति सुग्रीवात् क्रुद्धान्मृत्युमुखादिव ॥ २९ ॥
20ef कः करिष्यति सुग्रीवं सत्यसन्धमसंशयं ।
24ab कः करिष्यति रामस्य प्रियमात्यन्तिकं हरिः ॥ ३० ॥
26ab सर्वे हि प्लवतां श्रेष्ठाः सर्वे विश्रुतपौरुषाः ।
26cd उपदेशे च विख्याताः पूजिताश्चाप्यभीक्ष्णशः ॥ ३१ ॥
27ab न हि नो गमने भङ्गः कदाचित् कस्यचित् क्वचित् ।
सर्वे भवन्तो विख्याता गरुडानिलरंहसः ॥ ३२ ॥
यदि कश्चित् समर्थो वः सागरप्लवने हरिः ।
स ब्रवीतु हरिश्रेष्ठो वीर्यमूर्जितमात्मनः ॥ ३३ ॥
27cd दृष्टपूर्वोऽपि वा लोके श्रुतपूर्वोऽपि वा क्वचित् ।
29ab को वः किम्वा प्रक्रमते हरिश्रेष्ठो महाबलः ॥ ३४ ॥
29cd दृष्ट्वा वीर्यमहं तस्य भवद्भिः सहितस्त्वरन् ।
कृतकृत्यो भविष्यामि ध्रुवं प्लवगसत्तमाः ॥ ३५ ॥
तद्ब्रूत त्वरिताः सर्वे यस्य या परमा गतिः ।
32ab अथाङ्गदवचः श्रुत्वा हृष्टाः शाखामृगर्षभाः ॥ ३६ ॥

कृताञ्जलिपुटास्तत्र वाक्यमङ्गदमब्रुवन् ।
सेनामध्यात् समुत्पत्य हर्षयन्तः प्लवङ्गमान् ॥ ३७ ॥
गयो गवाक्षो गवयः शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव हनूमान् जाम्बवान् नलः ॥ ३८ ॥
नीलस्तारश्च रम्भश्च ऋषभः क्रथनस्तथा ।
सानुप्रस्थोऽथ पनसस्तथा दधिमुखो हरिः ॥ ३९ ॥
एतच्छ्रुत्वा महद्वाक्यमङ्गदेन समीरितं ।
वक्तुकामा महात्मानस्तस्थुः प्राञ्जलयस्तदा ॥ ४० ॥
गयः पूर्वमुवाचेदं गमिष्ये दशयोजनं ।
गवाक्षो योजनान्याह गमिष्ये विंशतिं परं ॥ ४१ ॥
अब्रवीद्गवयः श्रीमांस्तस्यां वानरसंसदि ।
यामि त्रिंशतमेकाह्ना योजनानीति वीर्यवान् ॥ ४२ ॥
अथाद्रिशिखराकारो विक्रमेऽप्रतिमो हरिः ।
शरभः सुमहातेजाः प्रत्युवाचेदमङ्गदं ॥ ४३ ॥
चत्वारिंशतमेकाह्ना योजनानि व्रजाम्यहं ।
ततो हेमोपमः श्रीमानब्रवीद्गन्धमादनः ॥ ४४ ॥
सुखं योजनपञ्चाशत् क्रमेयं वानरर्षभाः ।
ततस्तु हिमवत्प्रायो मैन्दो वाक्यमथाब्रवीत् ॥ ४५ ॥
योजनानामहं षष्टिमुपक्रमितुमुत्सहे ।
द्विविदस्तु महातेजाः प्रत्युवाचेदमङ्गदं ॥ ४६ ॥

गमिष्यामि न संदेहः सप्ततिं योजनान्यहं ।
अग्निपुत्रस्ततो धीमान् नीलो वचनमब्रवीत् ॥४७॥
अशीतिं वै गमिष्यामि योजनानां प्लवङ्गमाः ।
त्वष्टुः पुत्रो नलः श्रीमानब्रवीद्धरिपुङ्गवः ॥४८॥
गच्छेयं नवतिं पूर्णां योजनानीति हृष्टवत् ।
तारोऽब्रवीत् ततस्तत्र महाबलपराक्रमः ॥४९॥
नवतिं योजने द्वे च गमिष्यामीति वीर्यवान् ।
ततः सागरगम्भीरो वानरः पवनो जवे ॥५०॥
मन्दरस्य प्रमाणेन भास्कराग्निसमप्रभः ।
तत्र सर्वान् हरिवरान् जाम्बवाननुमान्य ह ॥५१॥
उवाच हरिमुख्यानां संनिधौ प्रहसन्निव ।
तारुण्ये मे बलं वीर्यं यश्चासीद्विक्रमो मम ॥५२॥
नैतावानेव खल्वस्ति गमने वा पराक्रमे ।
यत् कृतं यौवनस्थेन मया तच्छ्रोतुमर्हथ ॥५३॥
मया जटायुषा चैव बलियज्ञे सनातनः ।
विक्रमांस्त्रीन् क्रमन् विष्णुस्त्रिस्त्रिः प्रदक्षिणीकृतः ॥५४॥
बालभावे तदासीन्मे बलमप्रतिमं परं ।
स इदानीमहं वृद्धो न तथा विक्रमान्वितः ॥५५॥
संप्रत्येतावतीं शक्तिं गमने तर्कयाम्यहं ।
दशोनं योजनशतं नवोनं वा न संशयः ॥५६॥

जनकानां कुले जाता राघवाणां कुले वधूः ।
वसाम्यहमनाथेव दीना राक्षसवेश्मनि ॥ २० ॥
उत्क्षेपणं समुद्रस्य पतनं चन्द्रसूर्ययोः ।
चलनं शैलराजस्य शीतत्वं कृष्णवर्त्मनः ॥ २१ ॥
अश्रद्धेयानि कर्माणि यथैतानि नरोत्तम ।
तथानार्यमिदं मन्ये रावणं यद्रुपेक्षसे ॥ २२ ॥
एतच्चान्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥ २३ ॥
भर्तव्या रक्षणीया च पत्या पत्नी हि सर्वदा ।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥ २४ ॥
ततस्तद्वचनं श्रुत्वा वैदेह्याः शोककारणं ।
शोकेन महताविष्टो हनूमान् प्ररुरोद ह ॥ २५ ॥
एवमुक्त्वा वचस्तथ्यं सीता शशिनिभानना ।
उदैक्षत ततो भूयः शिंशपां तां हिरण्मयीं ॥ २६ ॥
प्रादेशमात्रं शाखायामुपविष्टं प्लवङ्गमं ।
ददर्श सीता कल्याणी प्राञ्जलिं प्रियवादिनं ॥ २७ ॥
तं दृष्ट्वापि ततः सीता दुःखिता हि तपस्विनी ।
निश्वस्य दीर्घं तत्रस्थं पुनर्वचनमब्रवीत् ॥ २८ ॥
द्रष्टुमिच्छामि रामस्य वदनं पुष्करेक्षणं ।
पौर्णमास्यां यथा पूर्णं विमलं चन्द्रमण्डलं ॥ २९ ॥

दृष्ट्वा हि वदनं तस्य प्रहृष्येयं प्लवङ्गम ।
अर्द्धसंजातसस्येव तोयं प्राप्य वसुन्धरा ॥ ३० ॥
इदं श्रेष्ठमभिज्ञानं ब्रूयास्त्वं मम तं प्रियं ।
शैलस्य चित्रकूटस्य पादे तरुलताकुले ॥ ३१ ॥
तापसाश्रमवासिन्याः प्राज्य मूलफलं वने ।
यत् सिद्धसंमते देशे मन्दाकिन्या ह्यदूरतः ॥ ३२ ॥
तेषूपवनषण्डेषु नानापुष्पसुगन्धिषु ।
विहृत्य सलिलक्लिन्ना तवाङ्केऽहमुपाविशं ॥ ३३ ॥
क्रीडता मे तदा चैव त्वयागृह्य मनःशिलां ।
रचितस्तिलको वक्त्रे स संक्रान्तस्तवोरसि ॥ ३४ ॥
रोहिमांसं पुनश्चापि विततं ह्याश्रमं प्रति ।
कर्षन् काको मया चैव लोष्टेन विनिवारितः ॥ ३५ ॥
रोषयन्निव मां काकस्तत्रैव परिपीडयेत् ।
तच्चाप्यपाहरन्मांसं प्रसह्य बलिभोजनः ॥ ३६ ॥
उत्कर्षन्त्याश्च वसनं क्रुद्धायास्तस्य पक्षिणः ।
स्रंस्यमाने च वसने त्वयोपेक्षा कृता मयि ॥ ३७ ॥
त्वयावहसिता चाहं क्रुद्धा विपरिधावती ।
भक्ष्यगृध्नेण काकेन बलवत् परिनिर्जिता ॥ ३८ ॥
आसीनस्य च ते श्रान्ता पुनरङ्के समाश्रिता ।
रुष्यन्ती च प्रहृष्टेन त्वयाहं तोषिता तदा ॥ ३९ ॥

तूर्णमभ्येत्य काकेन स्तनयोरस्मि ताडिता ।
वाष्पपूर्णमुखी दीना चक्षुषी परिमार्जती ॥ ४० ॥
23cd लक्षिताहं त्वया तत्र वायसेन प्रकोपिता ।
24ab तस्योद्धृत्य त्वयेषीका क्षिप्ता वरदपाणिना ॥ ४१ ॥
25cd ब्रह्मास्त्रेणाभिसंधाय सा प्रजज्वाल खे तदा ।
29ab अनुविद्धस्तया काको जगाम विविधा गतीः ॥ ४२ ॥
29cd संपतन् स इमं लोकं भयादनुचचार ह ।
30ab स च वर्षति पर्जन्ये क्रीडते पृषतान्तरे ॥ ४३ ॥
30cd तस्येषीका त्वया क्षिप्ता छायेवानुगता द्रुतं ।
31cd अलब्ध्वा शर्म लोकेषु त्वामेव शरणं गतः ॥ ४४ ॥
32cd परिद्यूनो विषण्णश्च स त्वयोक्तस्तदा विभो ।
33ab अमोघोऽयमिषुः क्षिप्तः किमङ्ग शातयामि ते ॥ ४५ ॥
33cd तेनैकं नयनं त्यक्तं तदीषीका व्यशातयत् ।
35ab मत्कृते काकमात्रे ते ब्रह्मास्त्रं समुदीरितं ॥ ४६ ॥
35cd कस्माद्यो मां हरेत् त्वत्तः क्षमेथास्त्वं महीपते ।
36ab एवमस्त्रविदां श्रेष्ठः सत्त्ववान् बलवानपि । ४७ ॥
36cd किमर्थमस्त्रं रक्षःसु न योजयसि राघव ।
तत् कुरुष्व महेष्वास कृपां मयि नरर्षभ ॥ ४८ ॥
43cd आनृशंस्यं परो धर्मस्त्वत्त एव श्रुतो मया ।
37ab न नागा न च गन्धर्वा नासुरा न च राक्षसाः ॥ ४९ ॥

तव राम रणे शक्ताः शरवेगं समासितुं ।
तव वीर्यवतः कश्चिच्चयस्ति मयि संभ्रमः ॥५०॥
किमर्थं न शरैस्तीक्ष्णैः क्षयं नयसि राक्षसान् ।
भ्रातुरादेशधर्मज्ञो लक्ष्मणो वा परंतपः ॥५१॥
अस्त्रवित् स महावीर्यो न परित्राति मामितः ।
तौ यदा नरशार्दूलौ वाय्वग्निसमतेजसौ ॥५२॥
सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतां ।
ममैव दुष्कृतं मन्ये महदस्ति न संशयः ॥५३॥
समर्थाववि तौ यन्मां नावेक्षेते सुदुःखितां ।
स वाच्यो राघवो वीरः पूर्णचन्द्रनिभाननः ॥५४॥
प्रणम्य पूर्वं सौहार्दात् सस्नेहं वचनं मम ।
कस्मान्न कुरुषे वीर कृपां मयि नरर्षभ ॥५५॥
जानामि त्वां महोत्साहं महासत्वं महाबलं ।
महाप्राज्ञं महेष्वासं वेगवन्तमरिन्दमं ॥५६॥
अपराजितमक्षोभ्यं गाम्भीर्ये सागरोपमं ।
कौशल्या लोकभर्तारं सुषुवे यं यशस्विनी ॥५७॥
तं रामं त्वं सुखं पृच्छेः शिरसा च प्रसादयेः ।
तत् कुरुष्व महेष्वास कृपां मयि नरर्षभ ॥५८॥
कथितं चेष्टितं चैव यदि स्मरसि राघव ।
ममार्थे सर्वरत्नानि प्रियाश्चैव वराङ्गनाः ॥५९॥

47cd ऐश्वर्यं च विशालायां पृथिव्यां नाभिनन्दति ।
48ab पितरं मातरं चोभौ योऽनुमान्य प्रसाद्य च ॥ ६० ॥
48cd अनुप्रव्रजितो रामं सुमित्रा येन सुप्रजा ।
49ab अंनुक्रोशेन धर्मात्मा त्यक्त्वा सुखमनुत्तमं ॥ ६१ ॥
49cd अनुगच्छति काकुत्स्थं पालयन् भ्रातरं वने ।
49ef सिंहस्कन्धो महाबाहुर्मनस्वी प्रियदर्शनः ॥ ६२ ॥
50ab वृद्धोपसेवी ह्रीमांश्च शूरो न बहुजल्पिता ।
50cd राजपुत्रः प्रियो राज्ञः सदृशः श्वशुरस्य मे ॥ ६३ ॥
51ab मत्तः प्रियतरो नित्यं मन्ये रामस्य लक्ष्मणः ।
51cd पितृवद्वर्तते रामे मातृवच्च तथा मयि ॥ ६४ ॥
52ab ह्रियमाणां तदा वीरो न मां जानाति लक्ष्मणः ।
52cd युज्यते धुरि यस्यां हि स तामुद्वहते धुरं ॥ ६५ ॥
52ef रामस्नेहाद्वसन्नेवं वृत्तमार्यमनुस्मरन् ।
54ab मृदुर्दान्तः शुचिर्दक्षः प्रियो रामस्य लक्ष्मणः ॥ ६६ ॥
54cd स च मद्वचनाद्वाच्यः कुशलं बलवत्तरः ।
55ab अप्रमत्तेन काकुत्स्थे भवितव्यं त्वयेति च ॥ ६७ ॥
55cd उत्थायोत्थाय वक्तव्यः सौमित्रिर्वचनान्मम ।
56ab कुशलं लक्ष्मणं पृष्ट्वा सुग्रीवं च महाबलं ॥ ६८ ॥
56cd इदं ब्रूयाश्च मे वाक्यं रामं शूरं पुनः पुनः ।
57ab जीवितं धारयिष्यामि मासं दशरथात्मज ॥ ६९ ॥

मासादूर्द्ध्वं न जीवेयं सत्यमेतद्ब्रवीमि ते ।
रावणेनोपसृष्टां मां निकृत्या प्राकृतामिव ॥ ७० ॥
त्रातुमर्हसि नश्यन्तीं पृथिवीमिव वासवः ।
सीताया वचनं श्रुत्वा हनूमानिदमब्रवीत् ॥ ७१ ॥
सर्वं करिष्यते रामो यदुक्तं मैथिलि त्वया ।
यत् तु रामोऽभिजानीयादभिज्ञानमनिन्दिते ॥ ७२ ॥
प्रीतिसंजननं तस्य तत् प्रदातुं त्वमर्हसि ।
सा निरीक्ष्य ततः सर्वं वेण्यां ग्रथितमुत्तमं ॥ ७३ ॥
विमुच्य प्रददौ तस्मै मणिरत्नं हनूमते ।
देयोऽयं राघवायेति सीता सुरसुतोपमा ॥ ७४ ॥
मणिरत्नं हरिवरः प्रतिगृह्याभिवन्द्य च ।
सीतां प्रदक्षिणं कृत्वा प्राञ्जलिः पार्श्वतः स्थितः ॥ ७५ ॥
आपृच्छे त्वां विशालाक्षि नोत्कण्ठां कर्तुमर्हसि ।
हर्षेण महताविष्टः सीतादर्शनजेन सः ।
हृदयेन गतो रामं शरीरेण तु विष्ठितः ॥ ७६ ॥
मणिवरमुपगृह्य तं महार्हं जनकनृपात्मजाधृतं पुरस्तात् ।
द्रुम इव पवनावधूतमूर्त्तिः क्षुभिततनुर्हनुमान् कृतस्तदा ॥ ७७ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे चूडामणिप्रदानं
नाम षट्त्रिंशः सर्गः ॥

## 37 + 38 = XXXVII.

1ab एवमुक्ता हनूमन्तं प्रियं वाक्यं मनोरमं ।
1cd उवाचात्महितं सीता गमिष्यन्तं प्लवङ्गमं ॥ १ ॥
2ab त्वां दृष्ट्वा प्रियवक्तारं प्रहृष्यामि प्लवङ्गम ।
2cd अर्द्धसंजातसस्येव तोयं प्राप्य वसुन्धरा ॥ २ ॥
3ab अन्यं रामान्न पुरुषं गात्रैर्मतिमतां वर ।
3cd संस्पृशेयं सकामाहं वर एष वृतो मया ॥ ३ ॥
4ab अभिज्ञानं तु रामाय दद्यास्त्वं हरिपुङ्गव ।
4cd त्विषामिषीकां काकस्य रोषादेकाक्षशातनीं ॥ ४ ॥
5ab मनः शिलायास्तिलको गण्डपार्श्वे निवेशितः ।
5cd त्वया प्रमृष्टः स च मे तच्च संस्मर्तुमर्हसि ॥ ५ ॥
6ab किं रावणगृहे सीतामुपेक्षसि परंतप ।
6cd वसन्तीं राक्षसावासे महेन्द्रवरुणोपम ॥ ६ ॥
ब्रूयाश्चैव हरिश्रेष्ठ मम कान्तं रघूत्तमं ।
7ab एष चूडामणिर्दिव्यो मया सुपरिरक्षितः ॥ ७ ॥
7cd यं दृष्ट्वा संप्रहृष्यामि व्यसनेऽपि तवानघ ।
8ab एष निर्यातितः श्रीमान् मया ते वारिसंभवः ॥ ८ ॥
10ab मासमेकं च जीवेयं तवागमनकाङ्क्षया ।
10cd ततः परं न शक्यामि जीवितुं शोककर्षिता ॥ ९ ॥

असह्यानि च दुःखानि वाचश्च हृदयच्छिदः ।
राक्षसीनां सुघोराणां त्वत्कृते मर्षयाम्यहं ॥ १० ॥
घोरो राक्षसराजोऽयमध्रुवश्च रणे जयः ।
त्वां च दृष्ट्वा विषीदन्तं न जीवेयमहं क्षणं ॥ ११ ॥
अनामयं च ब्रूयास्त्वं सहितौ रामलक्ष्मणौ ।
सुग्रीवं च महासत्त्वं सर्वान् वानरपुङ्गवान् ॥ १२ ॥
जीवन्तीं मां यथा रामः संतारयति कीर्त्तिमान् ।
तत् त्वया हनुमन् वाक्यं वाच्यं धर्ममवाप्नुहि ॥ १३ ॥
नित्यमुत्साहयुक्तस्य श्रुत्वा वाक्यं तवानघ ।
वर्धिष्यते दाशरथेः पौरुषं मदवाप्तये ॥ १४ ॥
ततः स हनुमान् वीरो राघवप्रियकाम्यया ।
सीतामाश्वासयामास पुनश्चैवमथाब्रवीत् ॥ १५ ॥
क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः ।
कस्तस्य सृजतो बाणान् स्थातुमुत्सहतेऽग्रतः ॥ १६ ॥
अप्यर्कमपि पर्जन्यमपि वैवस्वतं यमं ।
रणे योधयितुं शक्तस्तव हेतोर्विलासिनि ॥ १७ ॥
स हि सागरपर्यन्तां महीं शासितुमर्हति ।
त्वन्निमित्ते हि रामस्य जयो जनकनन्दिनि ॥ १८ ॥
स हि मर्मसु सर्वेषु ताडितो मन्मथेषुणा ।
न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ १९ ॥

मा देवि शोचमाना हि त्यज शोकमनिन्दिते ।
विष्णुना श्रीरिविन्द्रेण भर्त्रा नाथवती सती ॥ २० ॥
यस्या नाथस्तवार्याया राक्षसान्तकरः प्रभुः ।
अचिरेणैव कालेन त्वामितो नेष्यते वलात् ॥ २१ ॥
ब्रुवन्तमेवं मधुरं हनूमन्तं प्लवङ्गमं ।
22cd वर्धमानं कृतोत्साहमुवाच जनकात्मजा ॥ २२ ॥
23ab अश्रुपूर्णमुखी दीना वाष्पगद्गदया गिरा ।
23cd हनूमद्गमनोद्भूतशोकसंभ्रान्तमानसा ॥ २३ ॥
हनूमन् कपिशार्दूल मम दुःखाद्विमोचनं ।
यथा भवति भद्रं ते तथा त्वं कर्तुमर्हसि ॥ २४ ॥
इमं च तीव्रं मम शोकवेगं
26ab रक्षोगणौघैः परिभर्त्सनं च ।
ब्रूयाश्च रामस्य गतः समीपं
26cd शिवश्च पन्थास्तव नित्यमस्तु ॥ २५ ॥
20ab एवमुक्तस्तु वैदेह्या हनूमान् मारुतात्मजः ।
20cd पादाभिवन्दनं चक्रे विनीतो हरिपुङ्गवः ॥ २६ ॥
स राजपुत्र्या प्रतिवेदितार्थः
27ab कपिप्रवीरः प्रतिहृष्टमानसः ।
तदल्पशेषं समुदीक्ष्य कार्यम्
27cd आशामुदीचीं मनसा जगाम ॥ २७ ॥

स वाग्भिः सुप्रसन्नाभिर्गमिष्यन् प्रतिपूजितः ।
वन्दित्वा तामतिक्रम्य चिन्तयामास वानरः ॥ २८ ॥
अल्पशेषमिदं कार्यं दृष्टेयमसितेक्षणा ।
पूर्वानुपायानुत्क्रम्य चतुर्थ इह दृश्यते ॥ २९ ॥
न रावणः शीलगुणाय वर्तते
तथा न सान्त्वोपनयेषु कल्पते ।
न भेदसाध्यो बलदर्पितो जनः
पराक्रमस्त्वद्य ममेह रोचते ॥ ३० ॥
न चास्य कार्यस्य पराक्रमादृते
विनिश्चयस्त्वद्य ममोपपद्यते ।
हतप्रवीरस्य रणे तु रक्षसः
कथञ्चिदासादयतेऽनुमार्दवं ॥ ३१ ॥
एककार्ये विनिर्दिष्टो यो बहून्यपि साधयेत् ।
पूर्वकार्यक्रियासिद्धौ स कार्यं कर्तुमर्हति ॥ ३२ ॥
न ह्येकसाधको हेतुः कर्मणामुपपद्यते ।
कर्मणां समवेतानां बहूनामर्थसिद्धये ।
यस्त्वर्थं बहुधा वेत्ति स समर्थोऽर्थसाधने ॥ ३३ ॥
इहैव तावत् कृतनिश्चयो ह्यदं
परिव्रजेयं मनुजेश्वरालयं ।
परात्मसंहर्षविशेषतत्त्ववित्

7cd ततः कृतं स्यादिह भर्तृशासनं ॥ ३४ ॥
कथं न खल्वद्य भवेत् सुखागतं
8ab प्रसह्य युद्धं मम राक्षसैः सह ।
कथं च खल्वात्मबलं च तत्त्वतः
8cd प्रभावयेन्मां च रणे दशाननः ॥ ३५ ॥
9ab इदमस्य नृशंसस्य नन्दनोपममुत्तमं ।
9cd वनं नेत्रमनःकान्तं नानाद्रुमलतायुतं ॥ ३६ ॥
10ab सर्वं विध्वंसयिष्यामि शुष्कं वनमिवानलः ।
10cd तस्मिन् भग्ने ततः क्रोधं मम राजा गमिष्यति ॥ ३७ ॥
ततो महत् साश्वरथद्विपाकुलं
11ab बलं समादेक्ष्यति राक्षसाधिपः ।
त्रिशूलकालायसपट्टिशायुधं
11cd ततो महद्युद्धमिदं भविष्यति ॥ ३८ ॥
अहं तु तैः संयति भीमविक्रमैः
12ab समेत्य रक्षोभिरभीतचारिभिः ।
निहत्य वै रावणचोदितं बलं
12cd ततो गमिष्यामि कपीश्वरालयं ॥ ३९ ॥
15ab ततस्तु हनुमान् वीरो बभञ्ज प्रमदावनं ।
15cd मत्तद्विजगणाकीर्णं नानामृगसमायुतं ॥ ४० ॥
16ab तद्वनं मथितैर्वृक्षैर्भग्नैश्च सलिलाशयैः ।

चूर्णितैः पर्वताग्रैश्च बभूवानिष्टदर्शनं ॥ ४१ ॥

लतागृहैश्चित्रगृहैर्विनाशितैर्
मनोरमैर्बालमृगैश्च निर्धुतैः ।
शिलागृहैर्निर्मथितैस्तदा द्रुमैर्
अदृष्टरूपं तदभून्महद्वनं ॥ ४२ ॥

स तस्य कृत्वा नृपतेर्महाकपिर्
महद्व्यलीकं महतो मनस्विनः ।
युयुत्सुरेको बहुभिर्महाबलैः
श्रियोज्ज्वलंस्तोरणमाश्रितः कपिः ॥ ४३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे अशोकवनिकाभङ्गो
नाम सप्तत्रिंशः सर्गः ॥

## 39 = XXXVIII.

2ab ततः कपिनिनादेन वनभङ्गस्वनेन च ।
2cd बभूवुर्भयसंविग्नाः सर्वे लङ्कानिवासिनः ॥ १ ॥
3ab विद्रुताश्च दिशः सर्वा विनेदुर्मृगपक्षिणः ।
3cd रक्षसां च निमित्तानि क्रूराणि बहुशोऽभवन् ॥ २ ॥
4ab ततो गतायां निद्रायां राक्षस्यो विकृताननाः ।
4cd तद्वनं ददृशुर्भग्नं तं च वीरं महाकपिं ॥ ३ ॥
5ab स ता दृष्ट्वा महाबाहुर्महासत्त्वो महाकपिः ।
5cd चकार सुमहद्रूपं राक्षसीनां भयावहं ॥ ४ ॥
6ab ततस्तं मेघसंकाशमतिकायं महाबलं ।
6cd राक्षस्यो वानरं दृष्ट्वा पप्रच्छुर्जनकात्मजां ॥ ५ ॥
7ab कोऽयं कस्य कुतो वायं किं निमित्तमिहागतः ।
7cd कथं वा त्वयि संवादं राजपुत्रि करोत्ययं ॥ ६ ॥
8ab आचक्ष्व नो विशालाक्षि भयं मा भूत् तवाङ्गने ।
8cd संवादमसितापाङ्गि त्वया किं कृतवानयं ॥ ७ ॥
9ab अथाब्रवीद्राजपुत्री सीता सर्वाङ्गशोभना ।
9cd रक्षसां कामरूपित्वाद्विज्ञाने नास्ति मे मतिः ॥ ८ ॥
10ab यूयमेव विजानीत योऽयं यच्च करिष्यति ।
10cd अहिरेव ह्यहेः पादान् विजानीयान्न संशयः ॥ ९ ॥

अदृश्यमस्य संभीता नेतो निष्क्रमणे मतिं ।
करोमि राक्षसैरस्मि वञ्चिता कामरूपिभिः ॥ १० ॥
सीताया वचनं श्रुत्वा राक्षस्यो विस्मिता भृशं ।
स्थिताः काश्चिद्गताः काश्चिद्रावणाय निवेदितुं ॥ ११ ॥
बद्धाञ्जलिपुटाश्चापि शिरोभिर्धरणीं गताः ।
रावणाय सुसंविग्नाः शशंसुर्भ्रान्तलोचनाः ॥ १२ ॥
अशोकवनिकामध्ये राजन् भीमवपुः कपिः ।
सीतया कृतसंवादस्तिष्ठत्यमितविक्रमः ॥ १३ ॥
न च तं जानकी सीता हरिं हरिणलोचना ।
अस्माभिर्बहुशः पृष्टा निवेदयितुमिच्छति ॥ १४ ॥
इन्द्रस्य हि भवेद्दूतो दूतो वैश्रवणस्य वा ।
प्रेषितो वापि रामेण सीतान्वेषणकारणात् ॥ १५ ॥
सर्वं चैव वनं भग्नं तरसा तेन पार्थिव ।
यत्रास्ते जानकी सीता तदेव न विनाशितं ॥ १६ ॥
जानकीरक्षणार्थं वा श्रमाद्वा नोपलभ्यते ।
अथवा कः श्रमस्तस्य सैव तेनाभिरक्षिता ॥ १७ ॥
चारुपल्लवशाखश्च यं सीता समुपस्थित ।
प्रवृद्धः शिंशपावृक्षः स तेन परिपालितः ॥ १८ ॥
तस्योग्रकर्मणो राजन् दण्डमादेष्टुमर्हसि ।
सीता संभाषिता येन तद्वनं च विनाशितं ॥ १९ ॥

22ab स नः प्रतिगृहीतां तां नव रक्षोगणेश्वर ।
22cd कः सीतां परिभाषेत यो न स्यात् त्यक्तजीवितः ॥ २० ॥
23ab राक्षसीनां वचः श्रुत्वा रावणो राक्षसाधिपः ।
23cd हुताग्निरिव जज्वाल क्रोधसंरक्तलोचनः ॥ २१ ॥
24ab सोऽथ मानससंभूतान् किङ्करान् नाम राक्षसान् ।
24cd आदिदेश महातेजा ग्रहणार्थं हनूमतः ॥ २२ ॥
25ab तेषामशीतिसाहस्रा राक्षसानां महाचमूः ।
25cd निर्ययौ भवनात् तस्य शूलमुद्गरपाणिनां ॥ २३ ॥
26ab दृप्ताः स्वामिहिते युक्ता घोररूपा महाबलाः ।
26cd युद्धाभिमनसः सर्वे हनूमन्तमुपाद्रवन् ॥ २४ ॥
27ab हनूमानपि विक्रान्तः स्वपौरुषमुपाश्रितः ।
27cd सहस्रपादमासाद्य तच्चैत्यमधिरूढवान् ॥ २५ ॥
28ab अथाधिरोहतस्तस्य वेगाद्वेगवतो महत् ।
28cd सोपानमभवत् तत्र प्रतिश्रुत्कं महत्तरं ॥ २६ ॥
29ab आरुह्य स हि दुर्धर्षश्चैत्यप्रासादमुत्तमं ।
29cd हनूमान् प्रज्वलन् लक्ष्म्या पारियात्रोपमोऽभवत् ॥ २७ ॥
34ab स भूत्वा सुमहाकायः प्रभावान्मारुतात्मजः ।
34cd धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ २८ ॥
35ab तस्यास्फोटितशब्देन महता श्रोत्रघातिना ।
35cd पेतुर्विहङ्गमास्तत्र चैत्यपालाश्च मोहिताः ॥ २९ ॥

ायत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
ाजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ३० ॥
ासोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकारिणः ।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ३१ ॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिश्च प्रहरतः पादपैश्च सहस्रशः ॥ ३२ ॥
ाशयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीं ।
न सिद्धार्थो गमिष्यामि मिषतां सर्वरक्षसां ॥ ३३ ॥
एवमुक्त्वा विमानाग्रे चैत्यस्य हरिपुङ्गवः ।
ननदद्भीमनिर्ह्रादो लङ्कां नादैः प्रचालयन् ॥ ३४ ॥
ेनाक्रान्तः प्रचलितः प्रासादः स हनूमता ।
यशीर्यत गिरेः शृङ्गं वज्रेणेव विदारितं ॥ ३५ ॥
ोऽपि वानरमासाद्य चैत्ये तं राक्षसाः स्थितं ।
अभिपेतुर्महावेगाः पतङ्गा इव पावकं ॥ ३६ ॥
स तैः परिवृतः श्रीमान् सर्वतो हरिपुङ्गवः ।
नमाविध्य च लाङ्गूलं ननाद सुमहास्वनं ॥ ३७ ॥
तस्य संनादशब्देन तेऽभवन् भयमोहिताः ।
ददृशुर्हनुमन्तं च महामेघमिवोत्थितं ॥ ३८ ॥
स्वामिसंदेशनिःशङ्कास्ततस्ते राक्षसाः कपिं ।
चित्रैः प्रहरणैर्भीमैरभिपेतुः सहस्रशः ॥ ३९ ॥

45ab स तैः परिवृतो भीमैः सर्वतः कपिकुञ्जरः ।
क्रुद्धो वातात्मजः श्रीमान् पञ्चरूपं समाश्रितः ॥ ४० ॥
प्रासादस्य समुद्धृत्य स्तम्भं हेमविभूषितं ।
भ्रामयित्वा शतगुणं नाम विश्राव्य चात्मनः ॥ ४१ ॥
राक्षसानां शतं घोरं जघान कपिकुञ्जरः ।
स हत्वा राक्षसान् घोरान् किङ्करान् मारुतात्मजः ॥ ४२ ॥
अनिवृत्तमहोत्साहः पुनर्युद्धमकाङ्क्षत ।
46ab स तं परिघमुद्यम्य तद्वै राक्षसमण्डलं ॥ ४३ ॥
46cd सूदयामास संक्रुद्धो भीमं भीमपराक्रमः ।
अन्तरीक्षगतश्चेदं तदा वाक्यमुदाहरत् ॥ ४४ ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ४५ ॥
दूतोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ४६ ॥
ईदृशानां सहस्राणि विशिष्टानां च रक्षसां ।
बलिनां वानरेन्द्राणां सुग्रीववशवर्तिनां ॥ ४७ ॥
56ab स वानरसहस्राणां कोटीभिरभिसंवृतः ।
56cd आगमिष्यति सुग्रीवः सर्वेषां वो जिघांसया ॥ ४८ ॥
57ab नेयमस्ति पुरी लङ्का न यूयं न च रावणः ।
57cd यस्य वै लोकवीरेण बद्धं वैरं महात्मना ॥ ४९ ॥

जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ३० ॥
दूतोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकारिणः ।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ३१ ॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिश्च प्रहरतः पादपैश्च सहस्रशः ॥ ३२ ॥
नाशयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीं ।
स सिद्धार्थो गमिष्यामि मिषतां सर्वरक्षसां ॥ ३३ ॥
एवमुक्त्वा विमानाग्रे चैत्यस्य हरिपुङ्गवः ।
अनदद्भीमनिर्ह्रादो लङ्कां नादैः प्रचालयन् ॥ ३४ ॥
तेनाक्रान्तः प्रचलितः प्रासादः स हनूमता ।
व्यशीर्यत गिरेः शृङ्गं वज्रेणेव विदारितं ॥ ३५ ॥
तेऽपि वानरमासाद्य चैत्ये तं राक्षसाः स्थितं ।
अभिपेतुर्महावेगाः पतङ्गा इव पावकं ॥ ३६ ॥
स तैः परिवृतः श्रीमान् सर्वतो हरिपुङ्गवः ।
समाविध्य च लाङ्गूलं ननाद सुमहास्वनं ॥ ३७ ॥
तस्य संनादशब्देन तेऽभवन् भयमोहिताः ।
ददृशुर्हनुमन्तं च महामेघमिवोत्थितं ॥ ३८ ॥
स्वामिसंदेशनिःशङ्कास्ततस्ते राक्षसाः कपिं ।
चित्रैः प्रहरणैर्भीमैरभिपेतुः सहस्रशः ॥ ३९ ॥

45ab स तैः परिवृतो भीमैः सर्वतः कपिकुञ्जरः ।
क्रुद्धो वातात्मजः श्रीमान् पञ्चरूपं समाश्रितः ॥ ४० ॥
प्रासादस्य समुद्धृत्य स्तम्भं हेमविभूषितं ।
भ्रामयित्वा शतगुणं नाम विश्राव्य चात्मनः ॥ ४१ ॥
राक्षसानां शतं घोरं जघान कपिकुञ्जरः ।
स हत्वा राक्षसान् घोरान् किङ्करान् मारुतात्मजः ॥ ४२ ॥
अनिवृत्तमहोत्साहः पुनर्युद्धमकाङ्क्षत ।
46ab स तं परिघमुद्यम्य तद्वै राक्षसमण्डलं ॥ ४३ ॥
46cd सूदयामास संक्रुद्धो भीमं भीमपराक्रमः ।
अन्तरीक्षगतश्चेदं तदा वाक्यमुदाहरत् ॥ ४४ ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ४५ ॥
दूतोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ४६ ॥
ईदृशानां सहस्राणि विशिष्टानां च रक्षसां ।
बलिनां वानरेन्द्राणां सुग्रीववशवर्तिनां ॥ ४७ ॥
56ab स वानरसहस्राणां कोटीभिरभिसंवृतः ।
56cd आगमिष्यति सुग्रीवः सर्वेषां वो जिघांसया ॥ ४८ ॥
57ab नेयमस्ति पुरी लङ्का न यूयं न च रावणः ।
57cd यस्य वै लोकवीरेण बद्धं वैरं महात्मना ॥ ४९ ॥

ततस्तस्माद्भयान्मुक्ताः कथञ्चित् तत्र राक्षसाः ।
तान् हतान् सुबहून् दृष्ट्वा विषेदुर्नष्टचेतसः ॥५०॥
हतावशेषास्ते जग्मू राक्षसा रावणालयं ।
निहतान् किङ्करान् सर्वान् रावणाय न्यवेदयन् ।
तदप्रियं महाघोरं श्रुत्वा चुक्रोध रावणः ॥५१॥

इत्यार्षे रामायणे सुन्दरकाण्डे चैत्यविध्वंसनं नाम
अष्टात्रिंशः सर्गः ॥

40 = XXXIX.

किङ्करान् सुबहून् हत्वा हनूमान् हरिपुङ्गवः ।
उद्यानं द्रुमसंछन्नं बभञ्ज स लतावृतं ॥ १ ॥
चम्पकान् नागपुष्पांश्च तिलकान् वञ्जुलानपि ।
नारिकेलांस्तथाशोकानन्यांश्च विविधान् द्रुमान् ॥ २ ॥
बभञ्ज परमक्रुद्धो वृक्षपालान् जघान च ।
तं दृष्ट्वा भज्यमानं तु वनपालाः समन्ततः ॥ ३ ॥
विद्रुताः सहसा त्रस्ता जग्मुर्यत्र दशाननः ।
बद्धाञ्जलिपुटाश्चेदमूचुस्ते प्रणता भुवि ॥ ४ ॥
रावणं तत्र संक्रुद्धं शोकविप्लुतलोचनाः ।
नाशिताः सुमहांश्चैत्यो राक्षसप्रवरा हताः ॥ ५ ॥
भग्नं च तद्वनं राजन् वानरेण गतायुषा ।
तत् प्रसादं महाबाहो कर्तुमर्हसि मानद ॥ ६ ॥
यथा बध्येत दुष्टात्मा तथा यत्नो विधीयतां ।
श्रुत्वा तु तेषां तद्वाक्यं स क्रोधात् प्रज्वलन्निव ॥ ७ ॥
आदिदेश गणांस्तत्र राक्षसानां महाबलः ।
ते घोराः प्रहिता राज्ञा राक्षसा बलदर्पिताः ॥ ८ ॥
मुञ्चन्तः सिंहनादांश्च प्रययुर्यत्र वानरः ।
समासाद्य च तं वीरं हनूमन्तं महाबलं ॥ ९ ॥

आजग्मुर्विमलैः शूलैः परिघैः सपरश्वधैः ।
अन्यैश्च विविधैः शस्त्रैर्हनूमन्तं तथा शरैः ॥१०॥
ततः क्रुद्धः स हनुमान् प्रगृह्य विपुलं द्रुमं ।
जघान राक्षसान् घोरान् समेतांस्तान् महाबलः ॥११॥
ते पावकमिवासाद्य शलभा जीवितक्षये ।
जग्मुर्विनाशं सर्वे वै किङ्करास्ते च राक्षसाः ॥१२॥
निहतान् किङ्करान् श्रुत्वा रावणो लोकरावणः ।
प्रहस्तस्य सुतं वीरं जम्बुमालिनमादिशत् ॥१३॥
नाहत्वा वानरं शूरं विनिवर्तितुमर्हसि ।
संदिष्टो राक्षसेन्द्रेण प्रहस्ततनयो बली ॥१४॥
जम्बुमाली महादंष्ट्रो निर्जगाम धनुर्धरः ।
रक्तमाल्याम्बरधरः स्रग्वी रुचिरकुण्डलः ॥१५॥
महाविवृत्तनयनश्चण्डः समरदुर्जयः ।
धनुः शक्रधनुः प्रख्यं महद्रुचिरसायकं ॥१६॥
विस्फारयन् स वेगेन वज्रध्वनिसमस्वनं ।
तस्य विस्फारघोषेण धनुषो महता दिशः ॥१७॥
विदिशो गगनं चैव सहसा समपूरयत् ।
रथेन खरयुक्तेन तमागतमुदीक्ष्य सः ॥१८॥
हनूमान् वेगसंपन्नो जहर्ष च ननाद च ।
तं तोरणविटङ्कस्थं हनूमन्तं महाकपिं ॥१९॥

6cd जम्बुमाली महाबाहुर्विव्याध निशितैः शरैः ।
7ab अर्द्धचन्द्रेण वदने शिरस्येकेन कर्णिना ॥ २० ॥
7cd बाह्वोर्विव्याध नाराचैर्दशभिश्च स्तनान्तरे ।
8ab तस्य तच्छुशुभे ताम्रं शरेणाभिहतं मुखं ॥ २१ ॥
8cd शरदीवाम्बुजं फुल्लं विद्धं भास्कररश्मिभिः ।
9ab चुकोप बाणाभिहतो राक्षसस्य महाकपिः ॥ २२ ॥
9cd ततः स पार्श्वे विपुलां ददर्श शिंशपां तदा ।
10ab तरसा तां समुत्पाट्य चिक्षेप बलवान् कपिः ॥ २३ ॥
10cd तां शरैर्दशभिः क्रोधाद्बिभेदाशु निशाचरः ।
11ab विपन्नं कर्म तद्दृष्ट्वा हनूमांश्चण्डविक्रमः ॥ २४ ॥
11cd वृक्षन् सालं समुत्पाट्य भ्रामयामास वेगितः ।
12ab भ्रामयन्तं कपिं दृष्ट्वा तं सालं स महाबलं । २५ ॥
12cd चिक्षेप सुबहून् बाणान् जम्बुमाली महाबलः ।
13ab सालं चतुर्भिश्चिच्छेद वानरं पञ्चभिर्भुजे ॥ २६ ॥
13cd पादे चैकेन विव्याध दशभिश्च स्तनान्तरे ।
14ab स शरैः पूरिततनुः क्रोधेन महतावृतः ॥ २७ ॥
14cd तमेव परिघं वीरो भ्रामयामास वेगवान् ।
15ab अतिवेगोऽतिवेगेन भ्रामयित्वा मदोत्कटः ॥ २८ ॥
15cd परिघं पातयामास हृदये जम्बुमालिनः ।
16ab तस्य नैव शिरो नास्ति न जानुर्न भुजद्वयं ॥ २९ ॥

न धनुर्न रथो नाश्वो न सूतश्चापि दृश्यते ।
स हि तस्यातिवेगस्य वेगेन महताहतः ॥ ३० ॥
सर्वश्चूर्णीकृतस्तत्र समांसास्थिशिरास्तनुः ।
जम्बुमाली च निहतः किङ्कराश्चेत्यमर्षितः ।
चुक्रोध रावणः श्रुत्वा वायुसूनोर्महाबलः ॥ ३१ ॥

स रोषसंवर्तितलोललोचनः
प्रहस्तपुत्रे निहते महाबले ।
अमात्यपुत्राननिवार्यविक्रमान्
समादिदेशाशु तदा महारथान् ॥ ३२ ॥
स राक्षसानां निहतं महागणं
श्रुत्वा च भग्नं परमं प्रियं वनं ।
हनूमतश्चैव बलं स शुश्रुवान्
अमात्यपुत्रांस्तत आदिशद्युधि ॥ ३३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे जम्बुमालिबधो
नाम नवत्रिंशः सर्गः ॥

41 = XL.

1ab ततस्ते राक्षसेन्द्रेण चोदिता मन्त्रिणां सुताः ।
1cd निर्ययुर्भवनात् तस्मात् सप्तसप्तार्चिवर्चसः ॥ १ ॥
2ab महाबलपरीवारा धनुष्मन्तो महाबलाः ।
2cd कृतास्त्राः परमेष्वासाः परस्परकृतोद्यमाः ॥ २ ॥
3ab महारजतचित्राङ्गैर्ध्वजवद्भिरलंकृतैः ।
3cd तोयदस्वननिर्घोषैर्वाजियुक्तैर्महारथैः ॥ ३ ॥
4ab ततः काञ्चनचित्राणि धनूंष्यमितविक्रमाः ।
4cd विस्फारयन्तः संहृष्टास्तडित्वन्त इवाम्बुदाः ॥ ४ ॥
5ab जघन्यतस्ततस्ते तु विदित्वा किङ्करान् हतान् ।
5cd बभूवुः शोकसंतप्ताः सबान्धवसुहृज्जनाः ॥ ५ ॥
6ab ते परस्परसंहर्षास्तप्तकाञ्चनकुण्डलाः ।
6cd अभिपेतुर्हनूमन्तं तोरणस्थमवस्थितं ॥ ६ ॥
7ab सृजन्तो बाणवर्षाणि रथस्वनहयस्वनाः ।
7cd वृष्टिमन्त इवाम्भोदाश् छादयामासुरम्बरं ॥ ७ ॥
8ab अवकीर्णास्ततस्तैस्तु हनूमान् शरवृष्टिभिः ।
8cd अभवत् संवृताकारः शैलराडिव वृष्टिभिः ॥ ८ ॥
9ab स शरान् वञ्चयामास तेषामाशु चरन् कपिः ।
9cd रथवेगं च वीराणां विचरन् विमलेऽम्बरे ॥ ९ ॥

स तैः क्रीडन् धनुष्मद्भिर्व्योम्नि वीरो व्यकाशत ।
सहस्रांशुधनुष्मद्भिस्तोयदैरिव मारुतः ॥१०॥
स कृत्वा निनदं घोरं त्रासयन् परवाहिनीं ।
चकार हनुमान् वेगं तेषु रक्षःसु विस्मयं ॥११॥
तलेनाभ्यवधीत् कांश्चित् पद्भ्यामन्यान् परंतपः ।
मुष्टिनाताडयत् कांश्चिन्नखैरन्यानदारयत् ॥१२॥
प्रममाथोरसा कांश्चिदूरुभ्यामपरानपि ।
ततस्तेष्ववसन्नेषु भूमौ निपतितेषु च ॥१३॥
तत् सैन्यमभवत् सर्वं भयोद्विग्नं समन्ततः ।
भग्नचक्रैर्विमथितै रथैर्निहतवाजिभिः ।
भग्ननीडध्वजैश्च् छत्रैर्भूश्चकाशे समन्ततः ॥१४॥
ततः प्रवृद्धान् विनिहत्य राक्षसान्
महाबलांश्चण्डपराक्रमः कपिः ।
युयुत्सुरन्यैः पुनरेव राक्षसैस्
तदेव वीरोऽभिजगाम तोरणं ॥१५॥

इत्यार्षे रामायणे सुन्दरकाण्डे मन्त्रिपुत्रवधो
नाम चत्वारिंशः सर्गः ॥

## XLI.

हतान् मन्त्रिसुतान् श्रुत्वा वानरेण महात्मना ।
रावणः क्षुभिताकारश्चकार मतिमान् मतिं ॥ १ ॥
स विरूपाक्षयूपाक्षौ दुर्धर्षं च महाबलं ।
प्रघसं भासकर्णं च पञ्च सेनाग्रगामिनः ॥ २ ॥
संदिदेश दशग्रीवो वीरान् नयविशारदान् ।
स च क्रोधसमाविष्टो हनूमद्ग्रहणं प्रति ॥ ३ ॥
यान्तु सेनाग्रगाः शीघ्रं महाबलपराक्रमाः ।
सवाजिरथमातङ्गाः स कपिः शाम्यतामिति ॥ ४ ॥
यत्नेन खलु योद्धव्यं तमासाद्य महाबलं ।
कर्म चापि समाधेयं देशकालनयक्षमं ॥ ५ ॥
न ह्यहं तं कपिं मन्ये कर्मभिः परितर्कयन् ।
सर्वथा सुमहद्भूतं महाबलपराक्रमं ॥ ६ ॥
वानरोऽयमिति ज्ञात्वा न हि मे शुध्यते मनः ।
नैवाहं तं कपिं मन्ये यथेयं प्रस्तुता कथा ॥ ७ ॥
भवेदिन्द्रेण सृष्टोऽयमस्मान् प्रतिविरुध्यता ।
पन्नगा यक्षगन्धर्वा देवाश्च समहर्षयः ॥ ८ ॥
निर्याताः सर्वसैन्यैश्च संग्रामेषु पराजिताः ।
निर्जिता हि मया देवाः समासाद्य महारणे ॥ ९ ॥

तैरवश्यं विधातव्यं व्यलीकं किञ्चिदेव नः ।
चरोऽयं नात्र संदेहः स प्रसह्य निगृह्यतां ॥ १० ॥
हरिरित्येव नोपेक्ष्यः कपिः क्रूरपराक्रमः ।
दृष्टा हि हरयः शीघ्रा मया विपुलविक्रमाः ॥ ११ ॥
वाली चैव ससुग्रीवो हनूमांश्च महाकपिः ।
नीलः सेनापतिश्चैव ये चान्ये बलवत्तराः ॥ १२ ॥
नैषा तेषां गतिर्भीमा न तेजो न पराक्रमः ।
न मतिर्न बलोत्साहौ न रूपपरिकल्पना ॥ १३ ॥
ते यूयमप्रमत्ता वै कपिरूपव्यवस्थितं ।
सत्त्वं परममास्थाय निवारयितुमर्हथ ॥ १४ ॥
तस्मादस्य महोत्साहैरप्रमत्तैरुदायुधैः ।
सर्वैरेव समर्थैश्च भवितव्यमसंशयं ॥ १५ ॥
कामं लोकास्त्रयः सेन्द्राः ससुरासुरदानवाः ।
भवतामग्रतः स्थातुं न पर्याप्ता रणाजिरे ॥ १६ ॥
तथापि तु नयज्ञेन जयं च परिरक्षता ।
रक्षितव्या प्रयत्नेन युद्धे सिद्धिर्हि चञ्चला ॥ १७ ॥
ते स्वामिवचनं मूर्ध्ना प्रतिगृह्य महाबलाः ।
समुत्पेतुर्महावेगा हुताग्निसमवर्चसः ॥ १८ ॥
रथैर्मत्तैश्च मातङ्गैर्वाजिभिश्च महाबलैः ।
शस्त्रैश्च विविधाकारैरुपेताः प्रययुस्तदा ॥ १९ ॥

20ab ततस्ते ददृशुर्भीमं दीप्यमानं महाकपिं ।
20cd रश्मिमन्तमिवादित्यं स्वतेजोरश्मिमालिनं ॥ २० ॥
21ab तोरणस्थं महावेगं महासत्त्वं महाबलं ।
21cd महामतिं महोत्साहं महाकायपराक्रमं ॥ २१ ॥
22ab तं समीक्ष्याथ ते सर्वे दिक्षु सर्वास्ववस्थिताः ।
22cd तीक्ष्णैः प्रहरणैर्भीमैरभिपेतुः सहस्रशः ॥ २२ ॥
23ab तस्य पञ्चायसांस्तीक्ष्णान् शितान् पञ्चमुखान् ततः ।
23cd शिरस्युत्पलपत्राभान् दुर्धर्षः संन्यवेशयत् ॥ २३ ॥
25ab ततः स वीरो दुर्धर्षः सरथः सज्यकार्मुकः ।
25cd किरन् शरशतैस्तीक्ष्णैरभिपेदे महाकपिं ॥ २४ ॥
26ab भूयश्चाच्छादयामास शरजालेन सर्वतः ।
26cd वृष्टिभिः स निदाघान्ते जीमूत इव पर्वतं ॥ २५ ॥
27ab ताड्यमानस्ततस्तेन दुर्धर्षेणानिलात्मजः ।
27cd चकार निनदं घोरं व्यवर्धत च वानरः ॥ २६ ॥
28ab स दूरात् सहसोत्पत्य दुर्धर्षस्य रथे कपिः ।
28cd निपपात महावेगो विद्युदाशु गिराविव ॥ २७ ॥
29ab ततः प्रमथितं साश्वं रथं भग्नाक्षकूवरं ।
29cd विहाय न्यपतद्भूमौ दुर्धर्षः क्षीणजीवितः ॥ २८ ॥
30ab तं विरूपाक्षयूपाक्षौ दृष्ट्वा निपतितं भुवि ।
30cd उत्पेततुः सुसंक्रुद्धौ कूटमुद्गरधारिणौ ॥ २९ ॥

स ताभ्यां सहसोत्पत्य तोरणस्थो महाकपिः ।
मुद्गराभ्यां महातेजा वक्षस्यभिहतो भृशं ॥ ३० ॥
तयोर्वेगवतोर्वेगं निहत्य स महाकपिः ।
निपपात पुनर्भूमौ सुपर्णसमविक्रमः ॥ ३१ ॥
स तालवृक्षमुत्पाट्य प्रसह्य कपिकुञ्जरः ।
तावुभौ राक्षसौ घोरौ जघानामर्षचोदितः ॥ ३२ ॥
ततस्तौ निहतौ दृष्ट्वा वानरेण बलीयसा ।
अभिपाय महातेजा विक्रम्य प्रघसो हरिं ॥ ३३ ॥
भासकर्णश्च संक्रुद्धः शूलमादाय सत्वरं ।
एकं तं कपिशार्दूलमुभौ समभिपेततुः ॥ ३४ ॥
पट्टिशेन खराग्रेण प्रघसः प्रत्यविध्यत ।
भासकर्णश्च शूलेन राक्षसौ हरिमुत्तमं ॥ ३५ ॥
स ताभ्यां विकृतैर्गात्रैः क्षतजार्द्रतनूरुहः ।
शुशुभे वानरश्रेष्ठो बालसूर्य इवोदितः ॥ ३६ ॥
अथोत्पाट्य गिरेः शृङ्गं समृगव्यालपादपं ।
जघान हनुमान् वीरो राक्षसौ कपिकुञ्जरः ॥ ३७ ॥
ततस्तेष्ववसन्नेषु सेनापतिषु पञ्चसु ।
बलं तदवशेषं तु नाशयामास वानरः ॥ ३८ ॥
अश्वैरश्वान् गजैर्गजान् योधैर्योधान् रथै रथान् ।
स कपिः सूदयामास सहस्राक्ष इवासुरान् ॥ ३९ ॥

41ab हतैर्नागैस्तुरङ्गैश्च भग्नैस्तैश्च महारथैः ।
41cd राक्षसैश्चाभवद्भूमिर्दुर्गमार्गा समन्ततः ॥ ४० ॥

ततः कपिस्तान् ध्वजिनीपतीन् रणे
42ab निहत्य वीरान् बलवान् सवान्धवान् ।
तदेव वीरोऽभिजगाम तोरणं
42cd कृतक्षणः काल इव प्रजाक्षये ॥ ४१ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे पञ्चसेनापतिवधो
नाम एकचत्वारिंशः सर्गः ॥

43 = XLII.

स पञ्चसेनाधिकृतान् हनूमता
 हतान् रणे सानुचरान् सबान्धवान् ।
निशम्य राजा समरे सहोत्सुकं
 कुमारमक्षं प्रसमैक्षताथ वै ॥ १ ॥
स तस्य दृष्ट्या प्रसभं प्रचोदितः
 प्रतापवान् काञ्चनचित्रकार्मुकः ।
समुत्पपाताशु सदस्युदीरितो
 द्विजातिमुख्यैरिव हव्यवाहनः ॥ २ ॥
ततस्तपःसंचयसंग्रहार्जितं
 प्रतप्तजाम्बूनदजालचन्द्रकं ।
पताकिनं रत्नविभूषितध्वजं
 महाजवाष्टाश्वसमाधिसंवृतं ॥ ३ ॥
सुरासुराधृष्यमसङ्गचारिणं
 रविप्रभं व्योमचरं समाहितं ।
सतूणमिष्टासिनिबन्धसंग्रहं
 यथाक्रमावेशितशक्तितोमरं ॥ ४ ॥
विराजमानं परिपूर्णचन्द्रकं
 सहेमजालं शशिसूर्यवर्चसं ।

स बद्धतूणः स्वरथं समास्थितः
6cd संनिर्जगामामरतुल्यविक्रमः ॥ ५ ॥
ततो हरिं तं प्रसमीक्ष्य गर्वितं
11ab गतश्रमं शत्रुपराजयोचितं ।
अपेक्षमाणः समुदीर्णमानसो
11cd विचित्रबाणं जगृहे तदा धनुः ॥ ६ ॥
स तस्य वीरः कपिसत्तमस्य
14b सुवर्णपुङ्खान् सविषानिवोरगान् ।
शरानथो मूर्ध्नि समाहितस्तदा
14d निवेशयामास निशाचरात्मजः ॥ ७ ॥
15ab स तैः शरैर्मूर्ध्नि सुसंनिपातितैश्
चकार नादं घननादसंनिभं ।
महाकपिः संयति राक्षसार्दितः
क्षणं क्षरच्छोणितदिग्धलोचनः ॥ ८ ॥
15c नवोदितादित्यनिभः स खे चरन्
भुजोरुविक्षेपसुघोरदर्शनः ।
समुत्पपाताशु नभो महाकपिर्
भुजोरुवेगैः परितर्जयन्निव ॥ ९ ॥
समुत्पतन्तं तमभिद्रवद्बली
32ab स राक्षसेन्द्रस्य सुतः प्रतापवान् ।

रथी हरिश्रेष्ठतरं किरन् शरैः
पयोधरः शैलमिवाशु वृष्टिभिः ॥१०॥
स तान् शरांस्तस्य कपिर्विमोचयन्
चचार वीरः पथि वायुसेविते ।
शरान्तरे मारुतवन्मनोजवः
चलाचलः संयति चण्डविक्रमः ॥११॥
तमात्तबाणासनमाहवप्रियं
समापतन्तं निशितैः शरोत्तमैः ।
अवेक्ष्य सोऽक्षं मनसा च चक्षुषा
जगाम चिन्तामथ मारुतात्मजः ॥१२॥
अबालवद्बालदिवाकरोपमः
करोत्ययं कर्म महन्महाबलः ।
न तावदस्याहवकर्मशोभिनः
प्रघातने मे मतिराशु जायते ॥१३॥
असंशयं कर्म करोत्ययं महत्
सनागयक्षैर्बहुभिश्च दुष्करं ।
पराक्रमोत्साहसमृद्धमानसः
समीक्षते मां समराग्रमास्थितं ॥१४॥
न खल्वयं नाभिभवेदुपेक्षितः
पराक्रमो ह्यस्य रणे विवर्धते ।

प्रमापणं त्वस्य ममाद्य रोचते
29cd न वर्धमानो ऽग्निरुपेक्षितुं क्षमः ॥ १५ ॥
ततस्तलेनाभिजघान तद्रथं
32ab तथा प्लवङ्गाधिपमन्त्रिसत्तमः ।
प्रभग्ननीडः सयुगान्तकूबरः
32cd पपात भूमौ हतवाजिसारथिः ॥ १६ ॥
स तं परित्यज्य महारथो रथं
33ab समुत्पपातासिधरः सकार्मुकः ।
तपोऽभियोगादृषिरुग्रसंयमो
33cd विहाय देहं मरुतामिवालयं ॥ १७ ॥
ततः कपिस्तं विचरन्तमम्बरे
34ab पतत्रिराजानिलमार्गचारिणं ।
समाप्लुवन् मारुतसूनुराहवे
34cd करेण जग्राह स पादयोर्दृढं ॥ १८ ॥
स तं समाविध्य सहस्रशः कपिर्
35ab महोरगं क्रुद्ध इवाण्डजेश्वरः ।
कुमारमक्षं प्रविकीर्णभूषणं
35cd विनिष्पिपेषाशुगतिर्महाबलः ॥ १९ ॥
प्रभिन्नवक्षोरुकटीशिरोधरो
36ab विलम्बबाहुर्मथितास्थिबन्धनः ।

विमुक्तवासास्त्वगसृक्स्रवोक्षितो
कृतः क्षितौ वायुसुतेन राक्षसः ॥ २० ॥
महर्षिभिश्चक्रधरैर्महाव्रतैः
समेत्य भूतैश्च सयक्षपन्नगैः ।
सुरैश्च सेन्द्रैर्भृशजातविस्मयैर्
हते कुमारे स कपिः प्रपूजितः ॥ २१ ॥
स तं निहत्यामरवीरमर्दनं
कुमारमक्षं क्षतजोपमेक्षणं ।
तदेव वीरोऽभिजगाम तोरणं
कृतक्षणः काल इव प्रजाक्षये ॥ २२ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे अक्षकुमारबधो
नाम द्विचत्वारिंशः सर्गः ॥

## 44 = XLIII.

ततः स रक्षोऽधिपतिर्महात्मा
1ab हनूमताक्षे निहते कुमारे ।
मनः समाधाय निवृत्तशोकः
1cd समादिदेशेन्द्रजितं रणाय ॥ १ ॥
त्वमस्त्रभृच्छस्त्रभृतां वरिष्ठः
2ab प्रसन्नबुद्धिः समरेषु शक्तः ।
दैत्येषु देवेषु च दृष्टकर्मा
2cd पितामहाराधनसंचितास्त्रः ॥ २ ॥
3ab तवास्त्रबलमासाद्य न सुरा न मरुद्गणाः ।
3cd समर्थाः समरे स्थातुं त्रैलोक्यमपि चानघ ॥ ३ ॥
4ab त्वया तु रक्षसां संघो भुजवीर्याभिरक्षितः ।
4cd देशकालनयज्ञश्च त्वमेव मतिमान् वरः ॥ ४ ॥
न तेऽस्त्यसाध्यं समरेषु कर्म
5ab न तेऽस्ति तुल्यो मतिदर्शनेषु ।
न चापि कश्चिद्द्विषतां विनिग्रहे
5cd व्यतिक्रमेदस्त्रबलं बलं च ते ॥ ५ ॥
ममानुरूपं सुमहद्बलं च
6ab पराक्रमश्चार्थपरिग्रहश्च ।

सर्वेषु कार्येषु समर्थयुक्ता
बुद्धिस्तवास्त्येव महानुभाव ॥ ६ ॥
न च त्वमासाद्य रणावमर्द
परिश्रमं गच्छसि निश्चितार्थः ।
निहताः किङ्कराः सर्वे जम्बुमाली च राक्षसः ।
अमात्यपुत्रा वीराश्च पञ्च सेनाग्रगास्तथा ॥ ७ ॥
अक्षः कुमारो निहतो दुर्धर्षश्च महाबलः ।
न च मेऽन्योऽस्ति समरे त्वया तुल्योऽरिसूदन ॥ ८ ॥
न च मे सारता तेषु यथा त्वयि महाद्युते
तस्माद्गच्छाशु पुत्र त्वं युद्धाय विजयाय च ॥ ९ ॥
अयं ह्यदृष्टः परमश्च लोके
कपेः प्रभावश्च पराक्रमश्च ।
ममात्मजश्चैव तथैव स त्वं
कुरुष्व वीर्यं स्वगुणानुरूपं ॥ १० ॥
बलावमर्दस्त्वयि संनिविष्टो
यथा न गच्छेयुरुदारसत्वाः ।
तथा समीक्ष्यात्मबलं परं च
त्वजाद्धवं कर्म समारभस्व ॥ ११ ॥
न खल्वेषा मतिर्मह्यं यत् त्वां संप्रेषयाम्यहं ।
इयं तु राजधर्माणां क्षत्रस्य च गतिर्मता ॥ १२ ॥

13ab नानाशस्त्रैश्च संग्रामे युध्यस्व त्वमरिन्दम ।
13cd अवश्यमेव योद्धव्यं काम्यश्च विजयो रणे ॥ १३ ॥

ततः पितुस्तद्वचनं निशम्य
14ab प्रदक्षिणं दक्षसुतप्रभावः ।
चकार भर्तारमुदारसत्त्वो
14cd रणाय वीरः प्रतियातबुद्धिः ॥ १४ ॥

स पक्षिराजोपमभीमवेगैर्
17ab सिंहैश्चतुर्भिः शिततीक्ष्णदंष्ट्रैः ।
रथं समासक्तमसह्यवेगं
17cd समारुरोहेन्द्रजिदप्रधृष्यः ॥ १५ ॥

22

इत्यार्षे रामायणे सुन्दरकाण्डे इन्द्रजिन्निर्याणं
नाम त्रिचत्वारिंशः सर्गः ॥

44 = XLIV.

स रथी धन्विनां श्रेष्ठः शूरः शस्त्रविदां वरः ।
रथेनादित्यवर्णेन तं वानरमुपाद्रवत् ॥ १ ॥
स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च ।
निशम्य कपिशार्दूलः संप्रहृष्टस्ततोऽभवत् ॥ २ ॥
आयातं सरथं दृष्ट्वा शूरमिन्द्रजितं हरिः ।
ननाद सुमहानादं व्यवर्धत च वेगवान् ॥ ३ ॥
इन्द्रजित् तु रथं दिव्यमास्थितश्चित्रकार्मुकः ।
कार्मुकं स्फारयामास तडित्स्फूर्जितनिस्वनं ॥ ४ ॥

ततः समेतौ युधि तीव्रवेगौ
महाबलौ तौ रणकर्कशावुभौ ।
कपिश्च रक्षोऽधिपतेश्च पुत्रः
सुरासुरेन्द्राविव बद्धवैरौ ॥ ५ ॥
ततः स वीरस्य महारथस्य
धनुष्मतः शस्त्रभृतां वरस्य ।
शरप्रवेगानविचिन्तयन् स
चचार मार्गे पितुरप्रमेयः ॥ ६ ॥

शराणामग्रतस्तस्य वीरस्य कपिकुञ्जरः ।
प्रहस्य तस्थौ हनुमान् वायुवेगपराक्रमः ॥ ७ ॥

31ab तावुभौ वेगसंपन्नौ रणकर्मविशारदौ ।
31cd सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमं ॥ ८ ॥

हनूमतो वेत्ति न राक्षसोऽन्तरं
32ab न मारुतिस्तस्य च रक्षसोऽन्तरं ।
परस्परान्तर्विषयौ हि तावुभौ
32cd बभूवतुर्निर्विषपन्नगोपमौ ॥ ९ ॥

ततो मतिं राक्षसराजपुत्रस्
35ab चकार तस्मिन् हरिवीरमुख्ये ।
अवध्यतां तस्य कपेः समीक्ष्य
35cd कथं न गच्छेदिति निग्रहार्थं ॥ १० ॥

48ab ततस्तं ब्रह्मणोऽस्त्रेण बबन्धेन्द्रजिदस्त्रवित् ।
48cd सोऽभवन्निर्विचेष्टश्च पपात च महीतले ॥ ११ ॥
49ab ततस्ते राक्षसा बुद्ध्वा बद्धमस्त्रेण मारुतिं ।
49cd बबन्धुः शणपट्टैश्च द्रुमवल्कैश्च संहतैः ॥ १२ ॥

अथेन्द्रजित् तं द्रुमवल्कबद्धं
समीक्ष्य वीरं प्लवतां वरिष्ठं ।
मुमोच तं दारुणमस्त्रबन्धम्
अबुद्धमोक्षः कपिकुञ्जरेण ॥ १३ ॥

अहो महत् कर्म कृतं निरर्थकं
53ab न राक्षसैरस्त्रगतिस्तु शक्या ।

पितामहास्त्रे विहितेऽस्त्रमन्यत्
न वर्तते संशयिताः खलु स्मः ॥ १४ ॥
अस्त्रबन्धविमोक्षं तु हनूमान् नावबुध्यत ।
क्लिश्यमानश्च रक्षोभिः शरजालैर्निपीडितः ॥ १५ ॥
ततः पैतामहैर्मन्त्रैर्वरदत्तैः स मारुतिः ।
नात्मानं मोक्षयामास तस्मादस्त्राद्बलान्वितः ॥ १६ ॥
स वीर्यमस्त्रस्य कपिर्विदित्वा
पितामहानुग्रहमात्मनश्च ।
विमोक्षशक्तिं च कपिर्विचिन्त्य
पैतामहीं तामनुवर्तनाज्ञां ॥ १७ ॥
स रोचयामास परैश्च बन्धं
प्रसह्य रक्षोभिरवग्रहं च ।
कौतूहलान्मां यदि राक्षसेन्द्रो
द्रष्टुं व्यवस्येदिति जातबुद्धिः ॥ १८ ॥
हन्यमानस्ततः क्रूरै राक्षसैः काष्ठमुष्टिभिः ।
समीपं राक्षसेन्द्रस्य संप्राविश्यत मारुतिः ॥ १९ ॥
स रोषसंवर्तितताम्रनेत्रं
दशाननं वायुसुतो ददर्श ।
सुखोपविष्टं कुलशीलवृद्धान्
समादिशन्तं प्रति मन्त्रिमुख्यान् ॥ २० ॥

तं वानरेन्द्रः स तदोपगम्य
महाबलं वायुसुतो महात्मा ।
निवेदयामास कपीश्वरस्य
६५८ दूतः सकाशादहमागतोऽस्मि ॥ २१ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमद्ग्रहणं नाम
चतुश्चत्वारिंशः सर्गः ॥

45 = XLV.

ततस्तैः कर्मभिस्तस्य विस्मितो भीमकर्मणः ।
हनूमान् कोपताम्राक्षो राक्षसेन्द्रमवैक्षत ॥ १ ॥
भ्राजमानं महार्हेण काञ्चनेन विराजता ।
मुक्ताजालवृतान्तेन मुकुटेन महाद्युतिं ॥ २ ॥
वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः ।
हैमैराभरणैश्चित्रैर्मानसैरुपशोभितं ॥ ३ ॥
महार्हक्षौमसंवीतं चन्दनोत्तमभूषितं ।
अनुलिप्तं विचित्राभिर्विविधाभिश्च भक्तिभिः ॥ ४ ॥
विपुलैर्दर्शनीयैश्च रक्ताक्षैर्भीमविक्रमैः ।
दीप्ततीक्ष्णमहादंष्ट्रैः प्रदीप्तदशनच्छदैः ॥ ५ ॥
शिरोभिर्दशभिर्भीमैर्भ्राजमानं महौजसं ।
नानाव्यालमृगाकीर्णं शिखरैरिव मन्दरं ॥ ६ ॥
बाहुभिश्च सकेयूरैश्चन्दनोत्तमभूषितैः ।
भ्राजमानं भुजैः पीनैः पञ्चशीर्षैरिवोरगैः ॥ ७ ॥
महति स्फाटिके चित्रे रत्नसंयोगसंस्कृते ।
उत्तमास्तरणोपेते उपविष्टं वरासने ॥ ८ ॥
अलंकृताभिरत्यर्थं प्रमदाभिः समन्ततः ।
बालव्यजनहस्ताभिः स्त्रीभिश्च परिवीजितं ॥ ९ ॥

11ab महोदरप्रहस्ताभ्यां महापार्श्वेन रक्षसा ।
तथैव रणशूरेण निकुम्भेन महात्मना ॥ १० ॥
12ab उपोपविष्टं रक्षोभिश्चतुर्भिर्बलदर्पितैः ।
12cd कृत्स्नं परिवृतं लोकं चतुर्भिरिव सागरैः ॥ ११ ॥
11cd मन्त्रिभिर्मन्त्रतत्त्वज्ञैरमात्यैः शुभदर्शनैः ।
13cd अन्वास्यमानं सचिवैः सुरैरिव महेश्वरं ॥ १२ ॥
14ab अपश्यद्राक्षसपतिं हनूमानमितौजसं ।
14cd वेष्टितं मेरुशिखरैः सतोयमिव तोयदं ॥ १३ ॥
15ab बन्धनैः पीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः ।
15cd विस्मयं परमं गत्वा रक्षःपतिमवैक्षत ॥ १४ ॥
16ab भ्राजमानं ततो दृष्ट्वा हनूमान् राक्षसेश्वरं ।
16cd मनसा चिन्तयामास तेजसा तस्य मोहितः ॥ १५ ॥
17ab अहो रूपमहो वीर्यमहो सत्त्वमहो द्युतिः ।
17cd अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥ १६ ॥
18ab यदि नाधर्मपरवान् स्यादयं राक्षसेश्वरः ।
18cd स्यादयं सर्वलोकस्य स्वर्लोकस्यापि रक्षिता ॥ १७ ॥
19ab त्रस्यन्ति तेन खल्वस्माल्लोकाः ससुरदानवाः ।
19cd अयं ह्युत्सहते क्रुद्धः कर्तुमेकार्णवं जगत् ॥ १८ ॥
20ab इति चिन्तां बहुविधां चकार हनुमान् कपिः ।
20cd दृष्ट्वा राक्षसराजस्य प्रभावममितौजसः ॥ १९ ॥

## 46 = XLVI.

तमुद्वीक्ष्य महाबाहुं पिङ्गाक्षं पुरतः स्थितं ।
रोषेण महताविष्टो रावणः शत्रुतापनः ॥ १ ॥
संजातरोषताम्राक्षः प्रहस्तं रक्षसां वरं ।
कालयुक्तमुवाचेदं वचो विपुलविक्रमः ॥ २ ॥
दुरात्मा पृच्छ्यतामेष कः किं चास्य प्रयोजनं ।
वनभङ्गः किमर्थं वा राक्षसानां च तर्जनं ॥ ३ ॥
रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् ।
समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे ॥ ४ ॥
यदि तावत् त्वमिन्द्रेण प्रेषितो राक्षसालयं ।
तत्त्वमाख्याहि मा भूत् ते भयं वानर मोक्ष्यसे ॥ ५ ॥
यदि वैश्रवणस्यैव यमस्य वरुणस्य वा ।
घोररूपमिदं कृत्वा प्रविष्टोऽसि पुरीमिमां ॥ ६ ॥
विष्णुना प्रेषितो वासि लङ्काविजयकाङ्क्षिणा ।
न हि ते वानरं तेजो रूपमात्रं तु वानरं ॥ ७ ॥
तत्त्वं तु कथयस्वाद्य ततो वानर मोक्ष्यसे ।
अनृतं वदतो ह्यत्र जीवितं तव दुर्लभं ॥ ८ ॥
अथवा किं निमित्तं ते प्रवेशो राक्षसालये ।
त्वमेतत् कथय क्षिप्रं मोक्ष्यसे किं विवक्षया ॥ ९ ॥

10ab एवमुक्तो हरिवरस्तदा राक्षसपुङ्गवं ।
संवीक्ष्य स महावेगो हनूमान् मारुतात्मजः ॥ १० ॥
धृतिमान् वाक्यसंपन्नो रावणाय न्यवेदयत् ।
10cd अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य वा ॥ ११ ॥
11ab धनदेन न मे सख्यं विष्णुना नास्मि नोदितः ।
11cd मम वै जातिरेवेयं वानरोऽहमिहागतः ॥ १२ ॥
12ab दुर्लभे राक्षसेन्द्रस्य दर्शने सति तन्मया ।
12cd वनं राक्षसराजस्य दर्शनार्थं विनाशितं ॥ १३ ॥
13ab ये च ते राक्षसाः प्राप्ता बलिनो युद्धकाङ्क्षिणः ।
13cd रक्षणार्थं शरीरस्य प्रतियुद्धा रणाजिरे ॥ १४ ॥
14ab अस्त्रपाशैर्न शक्योऽहं बद्धुमत्यायतैरपि ।
14cd पितामहादेव पुरा मया लब्धो वरो महान् ॥ १५ ॥
14ef राजानं द्रष्टुकामेन मयास्त्रमनुवर्तितं ।
15ab विमुक्तश्चाहमस्त्रेण इति तद्विदितं च मे ॥ १६ ॥
प्राकृतोऽपि हि मे बन्धो मया समनुवर्तितः ।
स कार्यवत्तया राजन् न दौर्बल्याद्वेहि तत् ॥ १७ ॥
15cd दूतोऽहमिह संप्राप्तो राघवस्यामितौजसः ।
16ab श्रूयतां चापि वचनं मम पथ्यमिदं नृप ॥ १८ ॥

इति सुन्दरकाण्डे रावणदर्शनं नाम पञ्चचत्वारिंशः सर्गः

—प्रहस्तवाक्यं नाम षट्चत्वारिंशः सर्गः ॥

47 = XLVII.

तं समीक्ष्य महासत्त्वं सत्त्ववान् हरिपुङ्गवः ।
वाक्यमर्थवदव्यग्रमुवाच पवनात्मजः ॥ १ ॥
अहं सुग्रीवसंदेशादिह प्राप्तस्तवालयं ।
राक्षसेन्द्र हरीन्द्रस्त्वां भ्राता कुशलमब्रवीत् ॥ २ ॥
भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः ।
धर्मार्थसहितं युक्तमिह चान्यत्र च क्षमं ॥ ३ ॥
राजा दशरथो नाम नरकुञ्जरवाजिनां ।
पितेव सर्वलोकस्य सुरेश्वरसमद्युतिः ॥ ४ ॥
ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रीतिकरः शुभः ।
पितुर्नियोगान्निष्क्रान्तः प्रविष्टो दण्डकं वनं ॥ ५ ॥
लक्ष्मणेन सह भ्रात्रा भार्यया चापि सीतया ।
महर्षिभिरनुक्रान्तं धर्मपन्थानमास्थितः ॥ ६ ॥
तस्य भार्या वने नष्टा सती सीता तपस्विनी ।
वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ७ ॥
स मार्गमाणस्तां देवीं राजपुत्रः सहानुजः ।
ऋष्यमूकमनुप्राप्तः सुग्रीवेण च संगतः ॥ ८ ॥
तेन तस्य प्रतिज्ञातं सीतायाः परिमार्गणं ।
सुग्रीवस्य च रामेण हरिराज्यं प्रतिश्रुतं ॥ ९ ॥

10ab ततस्तेन रणे कृत्वा वयस्यं तव वालिनं ।
10cd सुग्रीवः स्थापितो राज्ये कपीन्द्राणां गणेश्वरः ॥ १० ॥
11ab स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसङ्गरः ।
11cd कपीन् संप्रेषयामास दिशः सर्वा कपीश्वरः ॥ ११ ॥
12ab कपीणां तु सहस्राणि अयुतान्यर्बुदानि च ।
12cd दिक्षु सर्वासु मार्गन्ते पृथिव्यामपि चाम्बरे ॥ १२ ॥
13ab वैनतेयसमाः केचित् केचित् तत्रानिलोपमाः ।
13cd अचिन्त्यगतयः शीघ्रा कपिवीरा महाबलाः ॥ १३ ॥
14ab अहं तु हनुमान् नाम मारुतस्यौरसः सुतः ।
14cd सीतायाः कारणे तूर्णं योजनानां शतं प्लुतः ॥ १४ ॥
15ab तच्छृणुष्व महाराज संदेशं मम सर्वशः । ✓
15cd इह लोके हितं चैव परत्र च सुखावहं ॥ १५ ॥
तद्भवान् दृष्टधर्मार्थस्तपः कृतपरिग्रहः ।
परदारान् महाप्राज्ञ नोपरोद्धुमिहार्हसि ॥ १६ ॥
16ab न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ।
16cd मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १७ ॥
17ab कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनां ।
17cd शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥ १८ ॥
18ab न चापि त्रिषु लोकेषु राजन् विद्येत कश्चन ।
18cd राघवस्य व्यलीकं यः कृत्वा सुखमवाप्नुयात् ॥ १९ ॥

तथ्यध्यात्महितं वीर सुहृदां चैव ते न्नमं ।
मन्यसे नरदेवाय जानकी प्रतिदीयतां ॥ २० ॥
त्वं तु काले हितं वाक्यमर्थधर्मानुसंहितं ।
मन्यस्व नरदेवाय जानकीं प्रतिपादय ॥ २१ ॥
दृष्टा चेयं मया देवी लब्धं यदिह दुर्लभं ।
उत्तरं कर्म यच्छेषं निमित्तं तत्र राघवः ॥ २२ ॥
लक्षितेयं विशालाक्षी मया शोकपरायणा ।
आदायेतां न जानीषे पञ्चास्यामिव भोगिनीं ॥ २३ ॥
नेयं जरयितुं शक्या सासुरैरमरैरपि ।
विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा ॥ २४ ॥
अपकुर्वन् हि रामस्य साक्षादपि पुरन्दरः ।
न सुखं प्राप्नुयाद्राजन् किं पुनस्त्वद्विधो जनः ॥ २५ ॥
यां सीतेत्यभिजानासि सेयं तिष्ठति रूपिणी ।
कालरात्रिं हि तां विद्धि सर्वलङ्कानिवासिनां ॥ २६ ॥
तपःसंतानलब्धस्ते योऽयमृद्धिपरिच्छदः ।
रामो नाशयितुं शक्तः सात्मत्राणपरिग्रहः ॥ २७ ॥
अबध्यतां तपोवीर्याद्भवान् यदभिमन्यते ।
आत्मनः सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥ २८ ॥
सुग्रीवो हि न देवेषु न रक्षःस्वसुरेषु वा ।
बली वानरराजोऽसौ न तस्माद्भयं तव ॥ २९ ॥

28cd ततः प्राणपरित्राणं कथं राजन् करिष्यसि ।
29ab न हि धर्मोऽप्यसंहार्यो विधर्मफलसंहितः ॥३०॥
29cd तदेव फलमाप्नोति धर्माणां फलनाशनः ।
30ab प्राप्तं धर्मफलं तावद्भवता नात्र संशयः ॥३१॥
30cd फलमस्याप्यधर्मस्य क्षिप्रमेवोपभोक्ष्यसे ।
31ab जनस्थानवधं श्रुत्वा वालिनश्च तथा क्षयं ॥३२॥
31cd रामसुग्रीवसख्यं च बुध्यस्व हितमात्मनः ।
32ab कामं खल्वहमप्येकः सवाजिरथकुञ्जरां ॥३३॥
32cd शक्तो नाशयितुं लङ्कां तत्र नैष तु निश्चयः ।
33ab रामेण तु प्रतिज्ञातं वानराधिपसंनिधौ ॥३४॥
33cd उच्छेदनममित्रस्य येनासौ मैथिली हृता ।
34ab तदलं कालपाशेन सीताविग्रहरूपिणा ॥३५॥
34cd स्वयं कण्ठावसक्तेन चिन्त्यतां हितमात्मनः ।
एवमुक्तस्तु कपिना पौलस्त्यो राक्षसाधिपः ।
36cd आज्ञापयद्वधं तस्य रावणः क्रोधमूर्छितः ॥३६॥

इत्यार्षे रामायणे सुन्दरकाण्डे दूतवाक्यं नाम
सप्तचत्वारिंशः सर्गः ॥

48 = XLVIII.

बधे तस्य समाज्ञप्ते रावणेन हनूमतः ।
निवारयंस्ततो वाक्यमभाषत विभीषणः ॥ १ ॥
स रक्षोऽधिपतिं क्रुद्धं कार्यं चेदमुपस्थितं ।
विदित्वा चिन्तयामास कार्यं कार्यविधिं प्रति ॥ २ ॥
निश्चितार्थं ततः साम्ना पूजयित्वा स रावणं ।
उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥ ३ ॥
इदं धर्मविरुद्धं हि इहामुत्र च गर्हितं ।
त्वत्तो न सदृशं वीर कपेरस्य प्रमापणं ॥ ४ ॥

असंशयं शत्रुरयं प्रवृद्धः
कृतं ह्यनेनाप्रियमप्रमेयं ।
दूता न बध्या हि वदन्ति सन्तो
दूतस्य दण्डा बहवो विसृष्टाः ॥ ५ ॥
वैरूप्यमङ्गेषु कशानिपातो
मौण्ड्यं तथा लक्षणसंनिपातः ।
एवंविधानाहुरिति रक्षवादी
दण्डेषु दूतस्य बधो न दृष्टः ॥ ६ ॥
कथं च धर्मादनपेतबुद्धिः
परापरप्रत्ययनिश्चितार्थः ।

भवद्विधः क्रोधवशं हि गच्छेन्

7cd क्रोधं न गच्छन्ति हि सत्ववन्तः ॥ ७ ॥

न धर्मवादे न च लोकतत्वे

8ab न शास्त्रबुद्धौ स्वमते न चापि ।

बले न तुल्यस्तव कश्चिदन्यस्

8cd त्वमुत्तमः सर्वसुरासुरेभ्यः ॥ ८ ॥

9ab न चैवास्य कपेर्घाते कांश्चित् पश्यामहे गुणान् ।

9cd तेष्वेव पात्यतां दण्डो यैरयं प्रेषितः कपिः ॥ ९ ॥

10ab साधु वा यदिवासाधु परैर्वचनमर्पितं ।

10cd ब्रुवन् परार्थे धर्मज्ञ न वधं प्राप्तुमर्हति ॥ १० ॥

11ab अपि चास्मिन् हते राजन् नान्यं पश्यामि वानरं ।

1cd इह यः पुनरागच्छेत् परं पारं महोदधेः ॥ ११ ॥

12ab तस्मादस्य बधे यत्नो न कार्यः शत्रुतापन ।

2cd भवान् सेन्द्रेषु देवेषु यत्नमास्थातुमर्हति ॥ १२ ॥

अस्मिन् विनष्टे न हि दूतमन्यं

13ab पश्यामि यस्तौ नरदेवपुत्रौ ।

युद्धाय युद्धर्षभ दुर्विनीताव्

13cd उद्योजयेद्धै भवता विरुद्धौ ॥ १३ ॥

पराक्रमोत्साहमनस्विना च

14ab सुरासुराणामपि दुर्जयेन ।

त्वया मनोनन्दन नैर्ऋतानां
न राघवः शक्यति योद्धुमाजौ ॥ १४ ॥
हिताश्च शूराश्च समाहिताश्च
कुलेषु जाताश्च महागुणेषु ।
मनस्विनः शस्त्रभृतां वरिष्ठा
योधास्तवेमे बहवोऽपि सन्ति ॥ १५ ॥
एतैः समेतैः सहितो हि राजन्
त्वं योत्स्यसे तौ खलु राजपुत्रौ ।
तस्मादयं गच्छतु तत्र मुक्तः
समाह्वयत्वाशु गतासुकल्पौ ॥ १६ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणवाक्यं
नाम अष्टचत्वारिंशः सर्गः ॥

## XLIX.

तस्य तद्वचनं श्रुत्वा राक्षसेन्द्रो महाबलः ।
देशकालहितं भ्रातुर्वाक्यमुत्तरमब्रवीत् ॥ १ ॥
सम्यगाह भवांस्तावद्दूतवध्या विगर्हिता ।
अवश्यं तु वधादन्यः करणीयोऽस्य निग्रहः ॥ २ ॥
कपीनां किल लाङ्गूलमिष्टं भूषणसंज्ञितं ।
तदस्य दीप्यतामाशु तेन दग्धेन गच्छतु ॥ ३ ॥
पश्यन्तु ज्ञातयश्चैनमङ्गवैरूप्यकर्षितं ।
समित्रबान्धवाः सर्वे सुहृदः सकपीश्वराः ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः ।
अवेष्टयन्त लाङ्गूलं जीर्णैः कार्पासिकैः पटैः ॥ ५ ॥
संवेष्ट्यमाने लाङ्गूले व्यवर्धत महाकपिः ।
शुष्कमिन्धनमासाद्य वनेष्विव हुताशनः ॥ ६ ॥
चिन्तयामास मतिमान् देशकालहितं वचः ।
कामं खलु न शक्ता मे बद्धस्यापि निशाचराः ॥ ७ ॥
छित्त्वा पाशान् समुत्पत्य गच्छतः प्रतिवारणे ।
अवश्यं चैव मे लङ्का द्रष्टव्या रजनीक्षये ॥ ८ ॥
रात्रौ न हि सुदृष्टा मे दुर्गमार्गा समन्ततः ।
कामं बन्धैश्च मे भूयो लाङ्गूलादीपनेन च ॥ ९ ॥

पीडां कुर्वन्तु रक्षांसि न च मे मनसि क्लमः ।
एवं निश्चित्य हनुमान् कार्यं रामहिते रतः ॥ १० ॥
तत् सर्वं क्षमयामास शक्तोऽपि हरिपुङ्गवः ।
ततस्ते वै दुरात्मानो राक्षसाः क्रोधमूर्छिताः ॥ ११ ॥
स्नेहावसिक्तं तत् कृत्वा ज्वालयामासुरोजसा ।
ततः प्रदीप्तलाङ्गूलं हनूमन्तं महाकपिं ॥ १२ ॥
निर्ययुर्बद्धमादाय राक्षसा राजवेश्मतः ।
शङ्खभेरीनिनादेन घोषयन्तस्ततस्ततः ॥ १३ ॥
राक्षसाः क्रूरकर्माणश्चारयन्ति स्म तां पुरीं ।
दुर्गकर्म स लङ्कायां सुनिविष्टांश्च रक्षिणः ॥ १४ ॥
गृहाणि च समृद्धानि राक्षसानां महात्मनां ।
अपश्यद्राजमार्गांश्च सुविभक्तांश्च चत्वरान् ॥ १५ ॥
रथ्याश्च गृहसंबाधा वापीर्देवगृहाणि च ।
दीप्यमाने ततस्तत्र लाङ्गूलाग्रे हनूमतः ॥ १६ ॥
राक्षस्यस्त्वरितं गत्वा सीतायै तन्न्यवेदयन् ।
यस्त्वया कृतसंवादः सीते ताम्रमुखः कपिः ॥ १७ ॥
स लाङ्गूलेन दीप्तेन रक्षोभिः परिकृष्यते ।
सा श्रुत्वा वचनं क्रूरमात्मनो मरणोपमं ॥ १८ ॥
जानकी शोकसंतप्ता हुताशनमुदीरयत् ।
मङ्गलाभिमुखी तस्य भूत्वा सीता महाकपेः ॥ १९ ॥

26cd उपतस्थे विशालाक्षी नियता हव्यवाहनं ।
27ab यद्यस्ति गुरुशुश्रूषा यद्यस्ति चरितं तपः ॥ २० ॥
27cd यदि वाप्येकपत्नीत्वं शिवो भव हनूमतः ।
28ab यदि कश्चिदनुक्रोशस्तस्यापि मयि धीमतः ॥ २१ ॥
28cd यदि वा भाग्यशेषं मे शिवो भव हनूमतः ।
29ab यदि मां वृत्तसंपन्नां मद्भावगतमानसां ॥ २२ ॥
29cd स विजानाति धर्मात्मा शिवो भव हनूमतः ।
31ab ततो विधूमः स्निग्धार्चिः प्रदक्षिणमथानलः ॥ २३ ॥
31cd जज्वाल मृगशावाक्ष्याः शंसन्निव शिवं कपेः ।
32ab स दीप्यमाने लाङ्गूले चिन्तयामास वानरः ॥ २४ ॥
32cd प्रदीप्तोऽग्निरयं कस्मान्न मां दहति पावकः ।
33ab दृश्यते च महाज्वालः कुरुते न च मे व्यथां ॥ २५ ॥
33cd शिशिरस्येव संघातो लाङ्गूले मे प्रतिष्ठितः ।
34ab अथवा तदिदं मन्ये यद्दृष्टं प्लवता मया ॥ २६ ॥
34cd रामप्रसादादाश्चर्यं पर्वतोदधिसंगमे ।
35ab यदि तावत् समुद्रस्य मैनाकस्य नगस्य च ॥ २७ ॥
35cd रामार्थे संभ्रमस्तीव्रः किमग्नेर्न भविष्यति ।
36ab सीतायाश्चानृशंस्येन तेजसा राघवस्य च ॥ २८ ॥
36cd पितुश्च मम सख्येन न मां दहति पावकः ।
स पुरद्वारमाश्रित्य शैलराजमिवोत्थितं ॥ २९ ॥

विभक्तरश्मिसंपातमाससाद महाकपिः ।
स भूत्वा शैलसंकाशः क्षणेन पुनरात्मवान् ॥ ३० ॥
ह्रस्वतां परमां गत्वा बन्धनानि व्यशातयत् ।
विमुक्तश्च ततः श्रीमानभवत् पर्वतोपमः ॥ ३१ ॥
ददर्श वीक्षमाणश्च परिघं तोरणाश्रयं ।
तमादाय महाबाहुः कालायसमयं दृढं ॥ ३२ ॥
स्वरक्षिणस्ततः सर्वांश्चूर्णयामास वानरः ।
हतशेषाश्च ये तत्र राक्षसास्ते प्रदुद्रुवुः ।
पृष्ठतो नान्वपश्यन् तु मृगा व्याघ्रभयादिव ॥ ३३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे लाङ्गूलप्रदीपनं
नाम एकोनपञ्चाशः सर्गः ॥

50 = L.

1ab वीक्षमाणस्ततो लङ्कां कपिः कृतमनोरथः ।
1cd वर्धमानमहोत्साहः कार्यशेषमचिन्तयत् ॥ १ ॥
2ab किमुत्तरमतः कार्यं कर्तव्यमिह सांप्रतं ।
2cd यदेषां रक्षसां भूयः संतापमुपपादयेत् ॥ २ ॥
3ab वलं तावत् प्रमथितं राक्षसप्रवरा हताः ।
3cd वनैकदेशः क्षयितः शेषं दुर्गविनाशनं ॥ ३ ॥
4ab विनाशितेषु दुर्गेषु भवेद्धि कर्मलाघवं ।
4cd कर्मणाल्पप्रयत्नेन मम स्यात् फलनिश्चयः ॥ ४ ॥
5ab यश्चायं मम लाङ्गूले दीप्यते हव्यवाहनः ।
5cd अस्य संतर्पणं कर्तुं युक्तमेभिर्गृहोत्तमैः ॥ ५ ॥
6ab ततः प्रदीप्तलाङ्गूलः सविद्युदिव तोयदः ।
6cd भवनाग्रेषु लङ्कायां विचचार महाकपिः ॥ ६ ॥
7ab मुमोच हनुमानग्निं प्रदीप्तश्च हुताशनः ।
साचिव्यं तत्र कुर्वाणःसुतस्य सुतवत्सलः ॥ ७ ॥
7cd प्रदीप्तमग्निं पवनस्तेषु वेश्मस्ववीजयत् ।
8ab ततः श्वसनसंयोगादतिदीप्तो हुताशनः ॥ ८ ॥
8cd कालाग्निरिव संहृष्टस्तेषु वेश्मसु दृश्यते ।
17ab तानि काञ्चनजालानि मुक्तामणिमयानि च ॥ ९ ॥

भवनानि व्यशीर्यन्त रत्नवन्ति महान्ति च ।
तानि भग्नगवाक्षाणि निपेतुर्वसुधातले ॥ १९ ॥
विमानानीव सिद्धानामम्बरात् पुण्यसंक्षये ।
वज्रविद्रुमवैदूर्यमुक्तारजतभूषितान् ॥ ११ ॥
विचित्रभवनोद्देशान् दह्यमानान् ददर्श सः ।
नाग्निस्तृप्यति काष्ठानां नाग्नेः स हरिपुङ्गवः ॥ १२ ।
न हनूमन्निरस्तानां राक्षसानां वसुन्धरा ।
स तु संवर्धितश्चाग्निर्लङ्कां राक्षससंकुलां ॥ १३ ॥
ज्वालामालापरिक्षेपैरदहन्मारुतात्मजः ।
तेन शब्देन वित्रस्ता धर्षितास्तेन चाग्निना ॥ १४ ।
अभिपेतुस्तदा घोरास्तं कपिं राक्षसोत्तमाः ।
ते राक्षसा भीमबला नानाप्रहरणान्विताः ॥ १५ ॥
आजघ्नुर्वानरश्रेष्ठं बाणैरादित्यसंनिभैः ।
आवर्त्त इव गाङ्गस्य तोयस्य विपुलो महान् ॥ १६ ॥
परिक्षिप्य हरिश्रेष्ठं स बभौ रक्षसां गणः ।
ते प्रदीप्तानि शूलानि प्रासान् बहुपरश्वधान् ॥ १७ ॥
तदा प्रति हनूमन्तं क्षिपन्ति स्म निशाचराः ।
ततो वातात्मजः क्रुद्धो भीमरूपं समास्थितः ॥ १८ ॥
प्रासादस्य समुत्पाट्य स्तम्भं हेमविभूषितं ।
भ्रामयित्वा शतगुणं नाम विश्राव्य चात्मनः ।

26cd जघान राक्षसान् घोरान् वज्रेणेन्द्र इवासुरान् ॥ ५९ ॥

हुताशनार्चिःपरिवेष्टिता सा
32ab हतप्रवीरा परमार्त्तयोधा ।
हनूमतः क्रोधबलाभिभूता
32cd बभूव शापोपहतेव लङ्का ॥ ६० ॥

स राक्षसांस्तान् सुबहून् निहत्य
वनं च भङ्क्ता सहचैत्यवृक्षं ।
विसृज्य रक्षोभवनेषु चाग्निं
जगाम सीतां मनसा महात्मा ॥ ६१ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे लङ्कादाहो
नाम पञ्चाशः सर्गः ॥

भवत्वधिरथैः त्तिप्रमाननं रुधिरोत्तितं ।
अभयं याचमानैश्च कूजद्भिश्च परीत्ततैः ॥ २० ॥
वानरैर्लत्त्यतां भूमिः किञ्चित् प्रमथितैर्मया ।
यदि व्यूहेन वा व्यूह्य योद्धव्यं वा यथातथं ।
तत् तदद्यैव नः सर्वमिहैवास्तु विनिश्चितं ॥ २१ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे महोदरवाक्यं
नाम द्व्यशीतितमः सर्गः

## 84 = LXXXIII.

1ab वृहस्पतिसमो बुद्ध्या समरे च दुरासदः ।
1cd विरूपाक्षः क्रमापेक्षी ततो वचनमब्रवीत् ॥ १ ॥
2ab रथिनः सादिनश्चैव गजारोहाश्च राक्षसाः ।
2cd पत्तयश्च महाकाया बलमेतच्चतुर्विधं ॥ २ ॥
3ab व्यूहं व्यूहेन विधिना राक्षसैः सुमहाबलैः ।
4ab न निवर्तयितुं शक्यं वानरैरिति मे मतिः ॥ ३ ॥
5ab स्थैर्यं च चलचित्तेषु वानरेषु न विद्यते ।
5cd न च निश्चलचित्तत्वमस्ति तद्वानरे बले ॥ ४ ॥
6ab गर्जितास्फोटितैस्तत्र बहुभिश्च करस्वनैः ।
6cd अनवस्थितचित्तानां द्रवन्तीं पश्य वाहिनीं ॥ ५ ॥
7ab + 9ab राक्षसैर्निहतानां च शरीराणि विभागशः ।
7cd + 9cd दृश्यन्तां वानरेन्द्राणां प्लवा इव विसर्पिणः ॥ ६ ॥
10ab रक्षोमध्यगताः खलु समरे तत्र वानराः ।
10cd मेघानामन्तरगताः सूर्यस्येव गभस्तयः ॥ ७ ॥
11ab ताडितानां विशीर्णानां विमला दन्तपङ्क्तयः ।
12cd वानराणां प्रदृश्यन्तां तुषारनिकरा इव ॥ ८ ॥
13ab तत्र तत्र च राजेन्द्र वानरैर्निहतैश्चिता ।
13cd भवत्यधिकया लक्ष्म्या वल्मीकशबलेव भूः ॥ ९ ॥

राक्षसा हि सुयुद्धेन भवन्त्वद्य रणाजिरे ।
आहारकलिताः सर्वे युगपत् कपिभोजनाः ॥ १० ॥
उद्भूतं धूमसंकाशं रणसंमर्दजं रजः ।
शत्रूणां प्रशमं यातु हतानां शोणिताम्बुना ॥ ११ ॥
राक्षसैर्विक्षताङ्गाश्च वानराः प्रस्तरा भुवि ।
रुधिरस्रवणैः सन्तु गैरिकाणामिवाकराः ॥ १२ ॥
अस्माकं शिविरे तावन्निशिताः शस्त्रपाणयः ।
शत्रूणां जीवपुष्पाणि विचिन्वन्तु नगेष्विव ॥ १३ ॥
समरे वानराः सन्तु शतशः शस्त्रविक्षताः ।
शोणिताम्बुपरिक्लिन्नाः सनिर्यासा इव द्रुमाः ॥ १४ ॥
हतैः शत्रुशरीरैश्च शतशोऽथ गतासुभिः ।
भारार्त्ता भूमिरस्त्वाशु किंशुकाकरसंनिभैः ॥ १५ ॥
शाखामृगाणां समरे शरीरं शस्त्रसंकुलं ।
वायुना कर्णिकाराणां वनमुन्मथितं यथा ॥ १६ ॥
व्यादेशः क्रियतां तावन्महावीर्य महारणे ।
यस्तत्र प्रवरः शत्रुर्हन्तव्यः स मया विभो ॥ १७ ॥
तं च हत्वा हनिष्यामि ये तत्र समनन्तराः ।
भविष्यन्ति द्विषन्तो मे ये च तत्र पदानुगाः ॥ १८ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विरूपाक्षवाक्यं नाम त्र्यशीतितमः सर्गः ॥

## LXXXIV.

धर्मे चार्थे च कुशलो धैर्येण च समन्वितः ।
अब्रवीन्मधुरं वाक्यमिदं भूयो विभीषणः ॥ १ ॥
यत् प्रियं च हितं चैव सानुबन्धं च सर्वशः ।
ऊचुस्तन्मन्त्रिणो वाक्यं बहु चैव विशेषतः ॥ २ ॥
प्राप्य कार्यं गरीयस्तु प्रियमुत्सृज्य दूरतः ।
हितमेव हि वक्तव्यं सुहृदा मन्त्रिणा सदा ॥ ३ ॥
तव राजेन्द्र विस्तीर्णैर्गुणैर्विश्रम्भतां गतः ।
इममर्थं प्रवक्ष्यामि हितबुद्ध्या परीक्षितं ॥ ४ ॥
इह धर्मार्थकामानामवाप्तिफलमिष्यते ।
तत्रार्थः सह कामेन निरीक्ष्यो धर्मचक्षुषा ॥ ५ ॥
परित्यज्य हि यो धर्ममर्थमर्थाय पश्यति ।
कामं वा कामलाभाय न स बुद्धिषु बुद्धिमान् ॥ ६ ॥
मन्त्रितोऽयं बहुविधो निःसारः सारदर्शिभिः ।
अमात्यैस्तव यो मन्त्रः संनियोगाद्विगर्हितः ॥ ७ ॥
परदाराभिमर्षं तु को धर्म इति वर्णयेत् ।
मतिमान् राजमन्त्रेषु यथावत् कृतनिश्चयः ॥ ८ ॥
यत् त्विदं कथ्यते रामकृतं व्युत्थितलक्षणं ।
तत्र किं लक्ष्यते रामे धर्माद्व्युत्थितलक्षणं ॥ ९ ॥

यदा च भवनाद्रामश्चापपाणिर्विनिर्गतः ।
त्वात्त्वमेवाभिसंधाय धर्माद्विचलितः कथं ॥ १० ॥
यदि तस्य व्यतिक्रान्तं भवेद्रामस्य धीमतः ।
क्रियातस्तस्य दोषो हि न भवेद्वनवासिनः ॥ ११ ॥
यथा हि बलवान् कश्चिदाहारान् द्विगुणानपि ।
भुङ्क्ता जरयते तद्वद्रामः पापविनाशनः ॥ १२ ॥
एवं कृत्वा मम मतं यद्रामः स्वपरिग्रहं ।
प्राप्नुयाद्गुणसंपन्नस्त्वां प्राप्य सुमहाबलं ॥ १३ ॥
त्वामवाप्य गुणैर्युक्तं को हि न प्राप्नुयादिह ।
त्वत्तः प्रीतिकरं राजन् गुणहीनोऽप्यसज्जनः ॥ १४ ॥
कार्यमात्मानुरूपं च धर्मो वा यदि रक्ष्यते ।
त्वत्प्रसादादियं सीता राजन् मोक्षणमर्हति ॥ १५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे पुनर्विभीषणवाक्यं
नाम चतुरशीतितमः सर्गः ॥

88 = LXXXV.

1ab विभीषणवचः श्रुत्वा बलवान् राक्षसेश्वरः ।
1cd अभवत् क्रोधसंरक्तः संध्यागत इवांशुमान् ॥ १ ॥
2ab नेत्रे प्रकृतिताम्रे तु भूयस्ताम्रत्वमागते ।
2cd ददृशाते सुभीमे वै शनैश्चरबुधाविव ॥ २ ॥
4ab क्रोधं तस्यानुपश्यन्तस्तीव्रं सक्रोधनस्य ते ।
4cd शीलज्ञाः सचिवाः सर्वे बभूवुर्जातसाध्वसाः ॥ ३ ॥
5ab अथ रोषाद्विनिष्पिष्य भृशं करतले करं ।
5cd अब्रवीद्रावणः क्रोधाद्विभीषणमिदं वचः ॥ ४ ॥
6ab परेषां गुणसंस्कारं मम चानर्थबुद्धितां ।
6cd सर्वथा यद्भवानाह प्रमाणं मम नैव तत् ॥ ५ ॥
7ab अकृत्वानुनयं तावत् सद्भिर्युक्तैः परस्परं ।
7cd प्रयोक्तुं हेतुसंपन्नो विधिः कार्यो विशेषतः ॥ ६ ॥
8ab अभिज्ञाः सर्वकार्येषु मतिपूर्वं महाबलं ।
8cd हरन्त्यभ्यधिकं यत्नान्न तु मोहान्मुमूर्षवः ॥ ७ ॥
9ab उत्प्रेक्ष्यामो वयं तावन्मतिमन्तं विभीषणं ।
9cd सर्वार्थेषु पराभूता गुरुं शिष्यगणा इव ॥ ८ ॥
10ab यन्मौर्ख्यं यच्च कार्पण्यं यः स्तम्भो यामनस्विता ।
10cd योऽधर्मः स च तेऽधर्मस्तमवाप्य महीपतिं ॥ ९ ॥

यथा पतङ्गो मुदितो मोहाद्विशति पावकं ।
क्षिप्रमात्मविनाशाय तद्व्यक्तं शूरलक्षणं ॥ १० ॥
शास्त्रवादानतिक्रम्य यो हि कार्यं महापदि ।
हठेनेच्छति निर्णेतुं तद्व्यक्तं नयलक्षणं ॥ ११ ॥
आकाशगमनादीनां सपक्षस्येव चेष्टने ।
ध्रुवमस्ति फलं किञ्चिच्चिन्तया सिद्धिलक्षणं ॥ १२ ॥
व्यक्तं नायं विशेषज्ञः सुनयापनये जनः ।
अतीन्द्रियमतिं प्राप्य गुणयुक्तं विभीषणं ॥ १३ ॥
यदि शूराः परे युद्धे वयं समरभीरवः ।
क्रियते किं न कार्पण्यात् प्रसभं शत्रुसंश्रयः ॥ १४ ॥
प्रकृतिः शाश्वती चैषा भीरूणामल्पचेतसां ।
युद्धकाले भवत्येव त्वद्विधानां दुरात्मनां ॥ १५ ॥
को हि नाम महासत्त्वः पूर्वमाधर्षितः परैः ।
दीनं वचनमादद्याद्धर्षयित्वा विभीषणं ॥ १६ ॥
किमत्रोक्ता बहुविधं सर्वथायं विभीषणः ।
योग्योऽस्माकं भयाद्दीनो न मन्त्रे न च विक्रमे ॥ १७ ॥
अवश्यं संविचतव्या युद्धे परमभीरवः ।
ग्रन्थिभूता महादोषाः शूराणां शौर्यनाशनाः ॥ १८ ॥
युद्धं घोरमसंप्राप्य यस्य हि व्यथते मनः ।
कथं समरमासाद्य स भवेत् पूज्यविक्रमः ॥ १९ ॥

21ab निर्वीर्या ये निरुत्साहाः शत्रुभेदे न शोभनाः ।
21cd तेषामेवंविधा बुद्धिर्यादृशी तव कातरा ॥ २० ॥
22ab यदि दर्पं परित्यज्य रामो मां शरणं व्रजेत् ।
22cd किं तदस्ति सतां कार्यं यन्न कुर्युः प्रसादिताः ॥ २१ ॥
23ab वैकृत्यं परिहर्तव्यं शत्रुपक्षे विशेषतः ।
23cd दया सर्वात्मना कार्या भवद्भिः शरणागते ॥ २२ ॥
24ab एवं कृत्वा न योगोऽस्ति विषस्य रुधिरस्य च ।
24cd संनिपातः समागन्तुमतः संयुगमिष्यते ॥ २३ ॥
25ab समर्थश्चाहमेवैको रणे रामं सलक्ष्मणं ।
25cd समरे तेजसा दग्धुं कक्षमग्निरिवोत्थितः ॥ २४ ॥
26ab निश्चयः क्रियतां युद्धे भवद्भिर्युद्धशालिभिः ।
26cd सदैवापसदं दीनं वर्जयित्वा विभीषणं ॥ २५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे रावणवाक्यं
नाम पञ्चाशीतितमः सर्गः ॥

८९ = LXXXVI.

ततः सागरगम्भीरः सत्त्ववान् विजितेन्द्रियः ।
अब्रवीद्रावणं धीमान् पुनरेव विभीषणः ॥ १ ॥
एतदेव विनाशस्य लक्षणं ब्रुवते बुधाः ।
धर्मिष्ठं वाक्यमुत्सृज्य कापथेन प्रवर्तनं ॥ २ ॥
अधर्मोऽयं महामोहाद्भवद्भिः परिगृह्यते ।
जयश्चैव हि दुष्प्राप्यः प्राप्तुं कलुषबुद्धिना ॥ ३ ॥
निमित्तं घननादस्य विस्तीर्णा विद्युतो यथा ।
अधर्मसहितं प्राप्य जयः कश्च सतां भवेत् ॥ ४ ॥
इह च प्रेत्य चावेक्ष्य सद्भिर्लक्षणलक्षितः ।
दुस्तरः प्राकृतैर्धर्मो बाहुभ्यामिव सागरः ॥ ५ ॥
इच्छाद्वेषादयो भावा नित्यमात्मगुणा यथा ।
तथा धर्मगुणाः कृत्स्नसुखानि सुखिनामिह ॥ ६ ॥
पर्याप्तं चाप्यभिज्ञानं धर्मस्य परिरक्षणे ।
यदल्पसुखिता लोकाः सर्वे भूयिष्ठदुःखिताः ॥ ७ ॥
किं ततः परमं किञ्चित् सुलभं फलमुत्तमं ।
बुद्ध्यापेक्षी च भूतानां सुखी तच्चापि धर्मतः ॥ ८ ॥
यश्चापि हि तपःश्लाघी न मनः परितापयेत् ।
यथा हि सुखसंधाने नौर्निमित्तमिवाम्भसि ॥ ९ ॥

9cd लोकानां सुखसंयाने तथा धर्मः स्वनुष्ठितः ।
10ab प्रकृतीनां प्रधानश्च यथा नेता भवानिह ॥ १० ॥
10cd तथा धर्मार्थकामानां धर्मः सम्यगनुष्ठितः ।
11ab यथा ह्यर्थपरित्यागादर्थः संप्राप्यते सुखं ॥ ११ ॥
11cd तथा स्वनिश्चयायत्तो धर्मः सुखकरः सतां ।
12ab तद्भावफललुब्धेन नातिदूरनिरीक्षिणा ॥ १२ ॥
12cd न शक्यश्चरितुं धर्मः शुभो ह्यकृतबुद्धिना ।
13ab यथा ह्यर्थश्च कामश्च मनसः प्रीतिवर्धनौ ॥ १३ ॥
13cd तथा क्षमा च धर्मश्च सद्य एव सुखावहौ ।
14ab सुदुश्चरत्वाद्धर्मस्य केचिद्धर्मपरायणाः ॥ १४ ॥
14cd कामे चार्थे च लुब्धानामन्त एव न विद्यते ।
15ab यत्र नेता च गुणवान् सहायाश्च गुणान्विताः ॥ १५ ॥
15cd तत्र धर्मार्थकामानां भवेत् सम्यक् परीक्षणं ।
16ab इह नेता च विगुणः सहायाश्चानुवर्तिनः ॥ १६ ॥
16cd एवं कृत्वा किमप्येतद्वर्तते मन्त्रसंज्ञकं ।
17ab अर्थानर्थाश्च यत्रासन् संशयश्च परीक्ष्यते ॥ १७ ॥
17cd स मन्त्र इति विज्ञेयः शेषास्तु खलु विक्रियाः ।
18ab मन्त्रं समुपनीतेन सुहृदा बुद्धिदर्शिना ॥ १८ ॥
18cd न युक्तं कैतवं कर्तुं हिताकारं विषादनं ।
19ab त्यक्त्वा कामपरं मन्त्रे स्वधर्मपरिवर्जितं ॥ १९ ॥

रामभेव गमिष्यामि नित्यं धर्मपरायणं ।
सुरासुरजयी राजा स हि नित्यं मया श्रुतः ॥ २० ॥
संश्रितानामसंत्यागी शरण्यो द्विषतामपि ।
चित्रमेतदयं त्यक्त्वा कृत्स्नं स्वजनमातुरः ॥ २१ ॥
धर्महेतोर्गमिष्यामि सोऽहं मानुषसंश्रयं ।
एवं कृत्वा मयि गते यद्यस्ति गुणदर्शिता ।
क्रियतां निश्चयः सम्यङ् नयबुद्धिनिमित्तजः ॥ २२ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणवाक्यं नाम
षडशीतितमः सर्गः ॥

## 90 = LXXXVII.

1ab एवं ब्रुवाणे राजेन्द्रो भ्रातरि तु विभीषणे ।
1cd+2ab उत्पपात सनिस्त्रिंशस्ततः क्रोधात् स रावणः ॥ १ ॥
2cd महाविद्युद्गुणः कृष्णः सनाद इव तोयदः ।
3ab आसनात् तूर्णमुत्पत्य पदा चाभिजघान तं ॥ २ ॥
3cd रावणः क्रोधसंरागादासनस्थं विभीषणं ।
4ab अभवत् पतितो भूमावासनात् स विभीषणः ॥ ३ ॥
4cd वज्रपातहतः श्रीमान् विशीर्ण इव पर्वतः ।
5ab अभवन्मन्त्रिणां तेषां विवादमनुपश्यतां ॥ ४ ॥
5cd पूर्णचन्द्रे ग्रहग्रस्ते प्रजानामिव संभ्रमः ।
6ab प्रहस्तः सासिहस्तं तं कुपितं राक्षसेश्वरं ॥ ५ ॥
6cd शनैर्निवारयामास कोषे चाप्यकरोदसिं ।
7ab ततः प्रकृतिमापन्नः शुशुभे राक्षसेश्वरः ॥ ६ ॥
7cd निवृत्तवेलः समये प्रसन्न इव सागरः ।
8ab परिवार्यासनस्थं च रावणं तेऽवतस्थिरे ॥ ७ ॥
8cd मेरोरिव महाशृङ्गं शिखराः पार्श्वतोऽपरे ।
9ab निःशब्दमभवत् कृत्स्नमथ तन्मन्त्रिमण्डलं ॥ ८ ॥
9cd परिवेश इवालक्ष्यः शशिनश्चारुदर्शनः ।
10ab अभवच्चोच्चसंरागो भूयिष्ठं स विभीषणः ॥ ९ ॥

अध्वराग्निरिवालक्ष्यः सम्यग्दीप्तसमन्वितः ।
अथ कोपाग्निमुद्भूतं शमयन् स विभीषणः ॥ १० ॥
चिन्तयामास धर्मात्मा मनसा हितमात्मनः ।
मार्दवेन च संपन्नस्तेजसा चैव रञ्जितः ॥ ११ ॥
सदश्व इव मर्यादां कौलीनां नात्यवर्तत ।
स मुहूर्त्तं विनिश्चित्य मुक्तः कृत्वा च निश्चयं ॥ १२ ॥
अब्रवीद्वाक्यमुत्थाय धर्मयुक्तं विभीषणः ।
मम धर्मार्थमुत्थानं न कामक्रोधसंज्ञितं ॥ १३ ॥
तस्मात् पादप्रहारोऽपि नायं मम पराभवः ।
तस्मिँल्लोके महादोषाः शोच्या धर्मविवर्जिताः ॥ १४ ॥
येषामभिजनं प्राप्य मतिः क्रोधसमन्विता ।
महत् सर्वविनाशस्य लक्षणं प्रतिभाति मे ॥ १५ ॥
अनयाद्धृदयं सर्वैर्भवद्भिः परिगृह्यते ।
शस्त्रमेकं शरीरं हि रणभूमौ विनाशयेत् ॥ १६ ॥
हन्यात् सगणमात्मानं बुद्धिः कलुषचेतसां ।
न हि तं कुरुते दोषं निशितं शस्त्रमुत्तमं ॥ १७ ॥
समुत्थाय यथा दोषाः प्राणिनामल्पचेतसां ।
अनागतपरिज्ञानमर्थस्य कुरुते बुधः ॥ १८ ॥
प्राप्तमर्थमनर्थं च कश्चिदेवावबुध्यते ।
बुद्ध्या ह्यर्थमनर्थं च पश्यन्तीह महागुणाः ॥ १९ ॥

20cd यदर्थे सति नोत्सेकं न भजन्त्यापदि व्यथां ।
21ab कुरुते दूरदर्शी हि सम्यगर्थपरिग्रहं ॥ २० ॥
21cd अनर्थार्थविनिर्मोक्षं समवाप्य महापदं ।
22ab न च दोषं नियच्छन्ति सम्यग्दृष्टपरावराः ॥ २१ ॥
22cd प्रमाणानीह कृत्स्नानि प्रमाणानि महात्मनां ।
23ab अनभिज्ञः प्रमाणानां केवलं दोषमाश्रितः ॥ २२ ॥
23cd शोकाम्भसि महाघोरे स निमग्नः प्रदृश्यते ।
24ab ऐतिह्यमनुमानं च प्रत्यक्षमपि चागमं ॥ २३ ॥
24cd ये हि सम्यक् परीक्षन्ते कुतस्तेषामबुद्धिता ।
25ab उपस्थितविनाशं त्वामात्मवंशविनाशनं ॥ २४ ॥
25cd क्रोधाघ्यास्यामि हित्वाद्य जलौघ इव सागरं ॥ २५ ॥
26ab तव भिन्नां मतिं ज्ञात्वा क्रूरां धर्मविदूषणां ॥ २५ ॥
26cd सर्वथासि मम त्याज्यः पङ्कमग्न इव द्विपः ।
27ab दोषपङ्कनिमग्नं त्वामयशः पललावृतं ।
27cd सर्वथा मानुषो रामस्त्वामन्तमुपनेष्यति ॥ २६ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणवाक्यं
नाम सप्ताशीतितमः सर्गः ॥

९० = LXXXVIII.

विभीषणवचः श्रुत्वा रावणः क्रोधमूर्छितः ।
अब्रवीत् परुषं वाक्यं भ्रातरं कालचोदितः ॥ १ ॥
वसेत् सह सपत्नेन क्रुद्धेनाशीविषेण च ।
न तु मिथ्याप्रतिज्ञेन संवसेच्छत्रुसेविना ॥ २ ॥
जानामि शीलं ज्ञातीनां सर्वकार्येषु राक्षस ।
हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ ३ ॥
प्रधानं साधनं वैद्यं धर्मज्ञं सज्जने रतं ।
ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥४॥
नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः ।
प्रच्छन्नहृदया घोरा ज्ञातयो नो भयावहाः ॥५॥
श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने क्वचित् ।
पाशहस्तान् नरान् दृष्ट्वा तान् शृणु त्वं विभीषण ॥ ६ ॥
नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः ।
घोराः स्वार्थप्रयुक्ताश्च ज्ञातयो नो भयावहाः ॥ ७ ॥
उपायं ते प्रवक्ष्यन्ति ग्रहणे नो न संशयः ।
सर्वेर्भयैर्ज्ञातिभयं सदा कष्टतमं मतं ॥ ८ ॥
संभाव्यं गोषु संपन्नं संभाव्यं ब्राह्मणे तपः ।
चापल्यं स्त्रीषु संभाव्यं संभाव्यं ज्ञातितो भयं ॥ ९ ॥

48ab न ते प्रियमिदं पाप यदहं लोकसत्कृतः ।
48cd ऐश्वर्यमभियातश्च रिपूणां मूर्ध्नि च स्थितः ॥ १० ॥
54ab उक्तवाक्ये दशग्रीवे जातकोपो विभीषणः ।
54cd मन्त्रिमध्ये स्थितः श्रीमानिदं वचनमब्रवीत् ॥ ११ ॥
55ab सुहृदा ह्यर्थकामेन वाक्यमुक्तं निशाचर ।
55cd न गृह्णन्ति नरा मूढाः कालस्य वशमागताः ॥ १२ ॥
49ab अन्यस्तु यदि मामेवं ब्रूयाद्वाक्यं निशाचर ।
49cd सोऽस्मिन् मुहूर्त्ते न भवेत् त्वां तु धिक् कुलपांशुलं ॥ १३ ॥
68ab इत्युक्त्वा परुषं वाक्यं न्यायवादी विभीषणः ।
68cd उत्पपात सनिस्त्रिंशश्चतुर्भिः सचिवैः सह ॥ १४ ॥
69ab अब्रवीच्च ततो भूयो जातकोपो विभीषणः ।
69cd अन्तरीक्षगतः श्रीमान् भ्रातरं राक्षसेश्वरं ॥ १५ ॥
72ab सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
72cd अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १६ ॥
यो हि धर्ममुपाश्रित्य हित्वा भर्तुः प्रियाप्रियं ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ १७ ॥
स त्वं भ्रातासि मे राजन् ब्रूहि त्वं यद्यदिच्छसि ।
सर्वं ते परुषं वाक्यं क्षमिष्यामि मुमूर्षतः ॥ १८ ॥
70ab+ 75ab शूराश्च बलवन्तश्च कृतास्त्राश्च नराः सदा ।
70cd 75cd कालाभिपन्नाः सीदन्ति सिकतासेतवो यथा ॥ १९ ॥

स्वहितं हितवाक्येन वाक्यमुक्तं दशानन ।
न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥ २० ॥
बद्धस्त्वं कालपाशेन सर्वभूतापहारिणा ।
विनश्यमानं त्यक्त्वा त्वां प्रदीप्तं शरणं यथा ॥ २१ ॥
राममेव गमिष्यामि शरणं राक्षसेश्वर ।
चतुर्भिरेतैः सहितः सचिवैः क्षणदाचरैः ॥ २२ ॥
दीप्तपावकसंकाशैः शरैः कनकभूषणैः ।
न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं रणे ॥ २३ ॥
आत्मानं परिरक्षस्व पुरीं चेमां सराक्षसां ।
खरमारीचवद्गत्वा नूनं त्वं यमसादनं ।
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २४ ॥

निवार्यमाणस्य मया हितैषिणा
न रोचते ते वचनं निशाचर ।
परीतकाला हि गतायुषो नरा
हितं न गृह्णन्ति सुहृद्भिरीरितं ॥ २५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे पुनर्विभीषणवाक्यं
नाम अष्टाशीतितमः सर्गः ॥

91 = LXXXIX.

1ab इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः ।
1cd क्रोधसंरक्तनयनं संध्यायामिव तोयदं ॥ १ ॥
2ab भुजङ्गकुटिलां रोषाद् भ्रुकुटीं भृशदारुणां ।
2cd कृत्वासीनं प्रपश्यन्तं प्रासादस्थममर्षणां ॥ २ ॥
3ab अभिवाद्य ततो भूयः क्रोधपर्याकुलेक्षणः ।
3cd चतुर्भिः सचिवैः सार्द्धं निश्चक्राम विभीषणः ॥ ३ ॥
4ab स मातरं पुनर्दृष्ट्वा सर्वमेव निवेद्य तत् ।
जगामाकाशमाविश्य कैलासं पर्वतोत्तमं ॥ ४ ॥
यत्र वैश्रवणो राजा तिष्ठत्यमितविक्रमः ।
गुह्यकैर्बहुभिः सार्द्धं यक्षैश्चैव महाबलैः ॥ ५ ॥
अथ प्रधानो धर्मात्मा लोकानामीश्वरः प्रभुः ।
ततः सभायां देवस्य राज्ञो वैश्रवणस्य सः ॥ ६ ॥
धनाध्यक्षसभां देवः प्राप्तो हि वृषभध्वजः ।
उमासहायो देवेशो गणैश्च बहुभिर्वृतः ॥ ७ ॥
अवतीर्य वृषात् तूर्णं महितः शूलधृग् विभुः ।
गिरिस्तस्य महातेजाः प्रविष्टस्तु सभां हरः ॥ ८ ॥
अज्ञा सहाययुक्तश्च तथा वैश्रवणः स्वयं ।
अन्योन्यं तौ समालिङ्ग्य उपविष्टावुभावपि ॥ ९ ॥

सभायां तत्र तौ देवौ ते च देवा यथाक्रमं ।
उपविष्टा गणाश्चैव यक्षाश्च सह गुह्यकैः ॥ १० ॥
अक्षद्यूतं ततस्ताभ्यां प्रवृत्तं समनन्तरं ।
एतस्मिन्नन्तरे तत्र राक्षसेन्द्रं विभीषणं ॥ ११ ॥
दृष्ट्वा पौलस्त्यमायान्तं शिवः प्राह धनेश्वरं ।
अयं विभीषणः प्राप्तः शरणं तव पार्थिव ॥ १२ ॥
मन्युनाभिप्लुतो वीरो राक्षसेन्द्रविमानितः ।
सिंहासनस्य भङ्गेन सिंहासनरणेन च ॥ १३ ॥
परुषाणां च वाक्यानां तस्मिन् बुद्ध्या रणेन च ।
इह प्राप्तस्तव ह्येष वस्तुं कृतमतिस्त्वयि ॥ १४ ॥
सर्वथा ह्येष दुर्धर्षः क्षिप्रमद्यैव वीर्यवान् ।
रामाभ्यासं महावीर्यो गच्छतां तव शासनात् ॥ १५ ॥
ततो यातं नरव्याघ्रः स रामः शत्रुतापनः ।
अभिषेक्ष्यति राज्येन राक्षसानां विभीषणं ॥ १६ ॥
सख्ये चैव तदा रामः सुग्रीवश्च तथा कपिः ।
वरयिष्यति दुर्धर्षो रणे वीरं विभीषणं ॥ १७ ॥
ततस्तु संगता ह्येते दीप्तास्त्रय इवाग्नयः ।
लोककार्यं करिष्यन्ति शिवं हि विबुधैः सह ॥ १८ ॥

सविद्युतो विप्रगणैरभिष्टुता
वहन्ति यज्ञं सुरभूतये शुभं ।

सुसंस्कृतं हव्यवहाः क्रतौ हुतं
तथा त्रयो रामविभीषणादयः ॥ १९ ॥
कपिप्रवीरश्च सुसंमतो बली
विभीषणेनानुगतो महात्मा ।
महद्धि लोके ह्यसुरामरे यथा
तथा ह्ययं कर्म करिष्यतेऽनघ ॥ २० ॥
एवं संजल्पतस्तत्र संप्राप्तश्च विभीषणः ।
जानुभ्यां पतितो गत्वा शिरसा ऽवनीं गतः ॥ २१ ॥
तं प्राह शङ्करः श्रीमान् स च वैश्रवणः प्रभुः ।
उत्तिष्ठोत्तिष्ठ भद्रं ते मा मन्युं कुरु राक्षस ॥ २२ ॥
श्रियं प्राप्नुहि दुर्धर्ष दशग्रीवादनन्तरं ।
गच्छ सौम्य गुणारामो रामो यत्र महाभुजः ॥ २३ ॥
सुग्रीवो वानरश्चैव लक्ष्मणश्च प्रतापवान् ।
इतो गतं महातेजा रामः शस्त्रभृतां वरः ॥ २४ ॥
अभिषेक्ष्यति राज्येन लङ्कायां शत्रुघातिनं ।
रावणं च रणे रामः सगणं पुरुषर्षभः ॥ २५ ॥
निहनिष्यति धर्मात्मा प्रसह्य रणमूर्द्धनि ।
तं निहत्य महाबाहुः सीतामादाय शत्रुहा ॥ २६ ॥
स्वपुरीं यास्यते धीमान् सह सौमित्रिणा प्रभुः ।
लङ्कायामीश्वरं चैव भवन्तं विबुधोपमं ॥ २७ ॥

स्थापयिष्यति धर्मात्मा न चिराय महायशाः ।
ततो वैश्रवणो राजा पौलस्त्यकुलनन्दनं ॥ २८ ॥
विभीषणं राक्षसेन्द्रं तत्र प्राह महाद्युतिः ।
त्वं राजा सर्वथा वीर लङ्कायां प्रस्थितस्तदा ॥ २९ ॥
भविष्यस्यचिरादेव दृष्टमेतत् पुरातनं ।
स त्वं धर्मभृतां श्रेष्ठ क्षिप्रमद्यैव राघवं ॥ ३० ॥
भवाय सर्वभूतानामभवाय च रक्षसां ।
उपगच्छ नरव्याघ्रमात्मनश्च विभूतये ॥ ३१ ॥
त्वं रामसहितः क्षिप्रं कुरु कार्यं दिवौकसां ।
ऋषीणां च महाभाग ये चान्ये धर्ममाश्रिताः ॥ ३२ ॥

अधर्मशीलं निरपत्रपं यथा
निरङ्कुशं वैरमदानुगामिनं ।
तपश्चराणां मृदुसौम्यशीलिनां
सदा विरुद्धं ज्ञहि रावणं तथा ॥ ३३ ॥
महाध्वरे सोमविघातने यथा
तथा च चारादिविघातने रतं ।
दशाननं पापरतं यथा स्थितं
प्रियेऽनुज्ञे देवगणे च नित्यं ॥ ३४ ॥
तथा विमार्गे तु यथा स्थितं ध्रुवं
न सत्पथं दूरत एव वर्जयेत् ।

दशाननं वर्जयतस्तवानघ
यशश्च ते नित्यसुखानि यानि नः ॥ ३५ ॥
श्रुत्वैतद्वचनं धीमानग्रजस्य मुखाच्च्युतं ।
अधोमुखो ध्यानपरो ह्यतिष्ठत् स विभीषणः ॥ ३६ ॥
तं ध्यायमानं भगवानुवाच प्रभुरव्ययः ।
उत्तिष्ठोत्तिष्ठ राजेन्द्र सुखमाप्नुहि शाश्वतं ॥ ३७ ॥
स्वकृतस्य महाप्राज्ञ तपसः फलमीदृशं ।
प्रत्यक्षं दृश्यते वीर सर्वमेतद्विभीषण ॥ ३८ ॥
तस्मादुत्तिष्ठ गच्छ त्वं पुराणं प्रभुमव्ययं ।
आधारं सर्वभूतानां शाश्वतं निरवग्रहं ॥ ३९ ॥
स हि धर्मनिधानं च गतिर्गतिमतां वरः ।
कृत्स्नस्य जगतो मूलं तस्माद्गच्छस्व राघवं ॥ ४० ॥
श्रुत्वैतद्वचनं तत्र नीलकण्ठेन भाषितं ।
उदतिष्ठन्महाबाहुस्तैरेव सचिवैः सह ॥ ४१ ॥
नमस्कृत्वा शिवं देवं तथा वैश्रवणं प्रभुं ।
रामाभ्यासं ययौ क्षिप्रं धर्मात्मा स विभीषणः ॥ ४२ ॥
जगामाकाशमाविश्य रामो यत्र महाबलः ।
आजगाम मुहूर्त्तेन यत्र रामः सलक्ष्मणः ॥ ४३ ॥
तं मेरुशिखराकारं ज्वलन्तमिव तेजसा ।
गगनस्थं महीस्थास्ते ददृशुर्वानराधिपाः ॥ ४४ ॥

स हि मेघाचलप्रख्यः कालः पुरुषविग्रहः ।
वरायुधधरः श्रीमानुत्पपात विहायसा ॥ ४५ ॥
ये चाप्यनुचरास्तस्य चत्वारो भीमविक्रमाः ।
तेऽपि चर्मायुधोपेता भूषणैश्च बभासिरे ॥ ४६ ॥
आत्मना पञ्चमं दृष्ट्वा सुग्रीवो वानरेश्वरः ।
वानरैः सह दुर्धर्षश्चिन्तयामास वीर्यवान् ॥ ४७ ॥
चिन्तयित्वा मुहूर्त्तं तु वानरांस्तानुवाच ह ।
हनुमत्प्रमुखान् सर्वानिदं वचनमुत्तमं ॥ ४८ ॥
एष वर्मायुधोपेतश्चतुर्भिः सह राक्षसैः ।
राक्षसोऽभ्येति वीक्षध्वमस्मान् हन्तुमसंशयं ॥ ४९ ॥
सुग्रीवस्य वचः श्रुत्वा सर्वे ते हरियूथपाः ।
सालानुत्पाट्य शैलांश्च सुग्रीवमिदमब्रुवन् ॥ ५० ॥
शीघ्रं व्यादिश नो राजन् बधायैषां दुरात्मनां ।
निपतन्तु हता यावद्धरण्यां रुधिरोक्षिताः ॥ ५१ ॥
तेषां संभाषमाणानामन्योन्यं स विभीषणः ।
उत्तरं तीरमासाद्य जलधेः खे व्यवस्थितः ॥ ५२ ॥
स उवाच महाप्राज्ञः स्वरेण महता नदन् ।
सुग्रीवं वानरैः सार्द्धं समवेक्ष्य विभीषणः ॥ ५३ ॥
प्राप्तोऽहं राघवं द्रष्टुं बुध्यध्वमिति वानराः ।
बलवान् रावणो नाम राक्षसो राक्षसाधिपः ॥ ५४ ॥

95ab येन सीता जनस्थानाद्धृता हत्वा जटायुषं ।
93cd तस्याहमनुजो भ्राता विभीषण इति श्रुतः ॥५५॥
96ab तमहं विविधैर्वाक्यैर्हेतुमद्भिर्न्यदर्शयं ।
96cd साधु निर्यात्यतां सीता रामायेति मुहुर्मुहुः ॥५६॥
97ab स च न प्रतिजग्राह रावणः कालचोदितः ।
97cd उच्यमानो हितं वाक्यं मर्तुकाम इवौषधं ॥५७॥
98ab सोऽहं परुषितस्तेन दासवच्च विमानितः ।
98cd त्यक्त्वा मित्राणि दारांश्च राघवं शरणं गतः ॥५८॥
99ab रावणस्यावलिप्तत्वाद्धर्ममेव समाश्रितः ।
99cd सहितः सचिवैर्भक्त्या रामं शरणमागतः ॥५९॥
100ab न हि मे जीवितेनार्थो नार्थैरन्यैस्तथा सुखैः ।
100cd तदहं सर्वसंत्यागाद्राघवात् सुखमाप्नुयां ॥६०॥
101ab उच्यमानोऽपि बहुशो मया धर्मार्थसंहितं ।
101cd वचो भृशं न गृह्णाति मुमूर्षुरिव भेषजं ॥६१॥
102ab जानन्नपि हि तस्याहं वीर्यं पौरुषविक्रमं ।
102cd रावणस्यातिदुर्बुद्धेर्दुस्तरं वरसंचयात् ॥६२॥
103ab धर्ममेव समाश्रित्य न ज्ञातिबधकाङ्क्षया ।
103cd संत्यज्य स्वजनं सर्वं राघवं शरणं गतः ॥६३॥
विवक्षया हि तदलं रामसंगमकाङ्क्षया ।
103ef सर्वथादुष्टभावोऽहं न मां शङ्कितुमर्हथ ॥६४॥

निवेदयत मां क्षिप्रं राघवाय महात्मने ।
सर्वभूतशरण्याय शरणं समुपस्थितं ॥ ६५ ॥
तस्य तद्वचनं श्रुत्वा सुग्रीवः प्लवगेश्वरः ।
राघवं समुपागम्य लक्ष्मणं चाब्रवीदिदं ॥ ६६ ॥
रावणस्यानुजो वीरो विभीषण इति श्रुतः ।
चतुर्भिः सचिवैः सार्द्धं भवन्तं शरणं गतः ॥ ६७ ॥
रावणेनैव प्रहितं मन्येऽहं तं विभीषणं ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ ६८ ॥
राक्षस्या दुष्टया बुद्ध्या जिह्मया समुपस्थितः ।
प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नः सोऽपि चानघ ॥ ६९ ॥
बध्यतामेष दण्डेन तीव्रेण ससुहृज्जनः ।
रावणस्य नृशंसस्य प्राप्तो भ्राता विभीषणः ॥ ७० ॥
एवमुक्त्वा तु तं रामं सुग्रीवो वाहिनीपतिः ।
वाक्यज्ञो वाक्यकुशलस्ततो मौनमुपागमत् ॥ ७१ ॥
तस्मिन् मौनमनुप्राप्ते रामो धर्मभृतां वरः ।
धर्ममेवाग्रतः कृत्वा विमर्शमगमत् तदा ॥ ७२ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणागमनं
नाम नवाशीतितमः सर्गः ॥

92 = XC.

1ab प्राप्तं विभीषणं श्रुत्वा रामः सुग्रीवमब्रवीत् ।
2cd आनृशंस्ये तदात्वे च तथायत्यां च संस्थितं ॥ १ ॥
3ab आस्यतामिह सुग्रीव सचिवांश्च समानय ।
3cd हनुमत्प्रमुखान् सर्वानन्यांश्च हरियूथपान् ॥ २ ॥
4ab तैः समेत्य हि कर्तव्यं करिष्यामि परीक्षणं ।
4cd सम्यग् वदसि सुग्रीव राजानो हि बहुच्छलाः ॥ ३ ॥
6ab ततः सुग्रीववचनात् समीयुः कपियूथपाः ।
6cd सर्वे चार्थविदः शूराः सर्वे शस्त्रप्रहारिणः ॥ ४ ॥
7ab विभीषणस्य तद्वाक्यं श्रुत्वा ते हरियूथपाः ।
8ab सोपचारं तदा राममूचुर्हितचिकीर्षवः ॥ ५ ॥
8cd अज्ञातं नास्ति ते किञ्चित् त्रिषु लोकेषु राघव ।
9ab स जनान् पूजयन् प्राज्ञ पृच्छस्यस्मान् सुहृत्तया ॥ ६ ॥
9cd त्वं हि सत्यरतः शूरो धार्मिको दृढविक्रमः ।
9ef परीक्षकारी मतिमान् विसृष्टात्मा सुहृत्सु च ॥ ७ ॥
5ab तस्मादेकैकशस्तावद्ब्रुवन्तु सचिवास्तव ।
5cd हेतुका मन्त्रसंपन्ना बहवश्च पुनः पुनः ॥ ८ ॥
11ab इत्युक्ते तु ततो वाक्ये मतिमानङ्गदस्तदा ।
11cd विभीषणपरीक्षार्थमुवाच वचनं हितं ॥ ९ ॥

शत्रोः सकाशात् संप्राप्तः सर्वथा तर्क्यतामयं ।
विश्वासयोग्यः सहसा न कर्तव्यो विभीषणे ॥ १० ॥
प्रच्छाद्य भावमेते हि चरन्ति शठबुद्धयः ।
प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुकृतो भवेत् ॥ ११ ॥
अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत् ततः ।
गुणतः संग्रहं कुर्याद्दोषतस्तु विवर्जनं ॥ १२ ॥
यदि दोषो महांस्तस्मिन् त्यज्यतामविशङ्कितं ।
गुणप्रभूतं मत्वा वा संग्रहः क्रियतां नृप ॥ १३ ॥
शरभश्चाथ निश्चित्य हरिर्वचनमब्रवीत् ।
क्षिप्रमस्मिन् नरव्याघ्र चारः प्रतिविधीयतां ॥ १४ ॥
प्रणिधाय हि चारेण ततो भावः परीक्ष्यतां ।
परीक्ष्य च ततः कार्यो यथान्यायं परिग्रहः ॥ १५ ॥
छादयित्वात्मनो भावं भवन्ति शठबुद्धयः ।
प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुकृतो भवेत् ॥ १६ ॥
जाम्बवानपि संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः ।
वाक्यं विज्ञापयामास गुणवद्दोषवर्जितं ॥ १७ ॥
बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः ।
अदेशकाले संप्राप्तः सर्वथा तर्क्यतामयं ॥ १८ ॥
अथ मैन्दस्तु संप्रेक्ष्य नयापनयकोविदः ।
वाक्यं वचनसंपन्नो बभाषे हेतुमत् तदा ॥ १९ ॥

वचनात् तावदस्यैव राघवस्य विभीषणः ।
पृच्छ्यतां मधुरैर्वाक्यैः शनैर्नरपतेः पुनः ॥ २० ॥
भावमस्य तु विज्ञाय ततस्त्वं करिष्यसि ।
यदि दुष्टो न वा दुष्टो बुद्धिपूर्वं नरर्षभ ॥ २१ ॥
अथ संस्कारसंपन्नो हनुमान् सचिवोत्तमः ।
उवाच वचनं श्लक्ष्णमर्थवन्मधुरं हितं ॥ २२ ॥
तं ब्रुवन्तं हरिश्रेष्ठं समर्थं वदतां वरं ।
नैवातिशयितुं शक्तो वृहस्पतिरपि ब्रुवन् ॥ २३ ॥
न दानान्न च संहर्षान्नाधिक्यान्न च कामतः ।
वक्ष्यामि वचनं राजन् यथार्थं कार्यगौरवात् ॥ २४ ॥
अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव ।
तत्र दोषं न पश्यामि क्रिया न ह्युपपद्यते ॥ २५ ॥
ऋते नियोगात् स्ववशैरवबोद्धुं न शक्यते ।
सहसा विनियोगो हि दोषवान् प्रतिभाति मे ॥ २६ ॥
चारप्रणिधिसंयुक्तं यदुक्तं सचिवैस्तव ।
अर्थस्यासंभवात् तत्र कारणं नोपपद्यते ॥ २७ ॥
सहसा न हि चारेण शक्यो बोद्धुं विभीषणः ।
कालप्रकर्षे दोषश्च तस्माच्चारो न विद्यते ॥ २८ ॥
अदेशकालसंप्राप्त इत्ययं यद्विभीषणः ।
विवक्षा तत्र मेऽस्तीयं तन्निबोध यथामति ॥ २९ ॥

स एष देशः कालश्च भवतीह यथा तथा ।
पुरुषं पुरुषं प्राप्य गुणदोषौ यथा तथा ॥ ३० ॥
सफलं भवति क्षिप्रं योगेनाभिसमाहितं ।
उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणं ॥ ३१ ॥
बालिनं च हतं श्रुत्वा सुग्रीवं चाभिषेचितं ।
राज्यं प्रार्थयमानस्य बुद्धिपूर्वं प्रपश्यतः ॥ ३२ ॥
एतानर्थान् पुरस्कृत्य विद्यते ह्यस्य संश्रयः ।
यथाशक्ति मयोक्तेऽस्मिन् राक्षसस्यार्जवं प्रति ॥ ३३ ॥
त्वं प्रमाणं प्रमाणानां सर्वबुद्धिमतां वरः ।
अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतात् ततः ॥ ३४ ॥
प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितः ।
मम चापि विवक्षास्ति काचित् प्रति विभीषणं ॥ ३५ ।
श्रुतमिच्छामि तत् सर्वं भवद्भिः श्रेयसि स्थितैः ।
मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन ।
दोषो यद्यपि तस्मिन् स्यात् सतामेतद्विगर्हितं ॥ ३६ ॥
एवं ज्ञात्वा महात्मानमार्यमार्गव्यवस्थितं ।
आनन्तर्येण संप्राप्तं विशोधयितुमर्हथ ॥ ३७ ॥
राघवस्य सुसंप्रीतः प्रीतो वायुसुतस्य च ।
प्रत्यभाषत सुग्रीवस्तत् कालसदृशं वचः ॥ ३८ ॥
किमत्र चित्रं धर्मज्ञ लोकनाथ सुखावहं ।

53cd यत् त्वमार्य प्रभाषेथाः सत्यवान् सत्पथे स्थितः ॥३९॥
54ab मम चाप्यन्तरात्मा वै शुद्धं वेत्ति विभीषणं ।
54cd हनूमानस्य भावज्ञस्तेन चापि परीक्षितः ॥४०॥
55ab तस्मात् क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव ।
55cd विभीषणो महाप्राज्ञः सखित्वं चाभ्युपैतु नः ॥४१॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणपरीक्षा
नाम नवतितमः सर्गः ॥

९३ = XCI.

इत्युक्तवति सुग्रीवे तदा हरिगणेश्वरे ।
उवाच रामो धर्मात्मा धर्मार्थसहितं वचः ॥ १ ॥
सदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ।
सूक्ष्ममप्यहितं कर्तुं मम शक्तः प्लवङ्गम ॥ २ ॥
पृथिव्यां राक्षसान् सर्वान् पिशाचांश्च सदानवान् ।
शक्तोऽहं सहसा हन्तुं दिव्येनास्त्रबलेन च ॥ ३ ॥
श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ ४ ॥
स तावत् प्रतिजग्राह खगो भार्यानिसूदनं ।
कपोतो वानरश्रेष्ठ किमुताहं विभीषणं ॥ ५ ॥
रावणभ्रातरं दीनं सर्वथा धर्ममाश्रितं ।
आगतं राक्षसैः सार्द्धं सहैभिर्वानरेश्वर ॥ ६ ॥
कन्नस्यर्षेस्त्वनुज्ञेन कण्डुना परमर्षिणा ।
शृणु गाथाश्चिरोद्गीता धर्मिष्ठाः सत्यवादिना ॥ ७ ॥
बद्धाञ्जलिपुटं दीनं याचन्तमपराधिनं ।
हन्यमानमरिं दृष्ट्वा रिपुणा शरणागतं ॥ ८ ॥
आर्त्तो वा यदि वा त्रस्तः परेषां शरणागतः ।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥ ९ ॥

10ab स चेद्भयाद्वा कामाद्वा मोहाद्वा तं न रक्षति ।
10cd समुद्विग्नं यथाशक्ति स पापो लोकगर्हितः ॥१०॥
11ab विनष्टः पश्यतस्तस्य रक्षितुः शरणागतः ।
11cd आदाय सुकृतं तस्मात् सर्वं गच्छत्यरक्षितः ॥११॥
12ab एष दोषो महांस्तात प्रपन्नानामरक्षणे ।
12cd अस्वर्ग्यश्चायशस्यश्च बलवीर्यविनाशनः ॥१२॥
14ab करिष्यामि यथावत् तत् कण्डोर्वचनमुत्तमं ।
14cd धर्मिष्ठं च यशस्यं च स्वर्ग्यं चापि महोदयं ॥१३॥
15ab अभयं सर्वभूतेभ्यो ददामीति हि मे व्रतं ।
15cd संग्रामेऽभिप्रपन्नानां तवास्मीति च वादिनां ॥१४॥
17ab आनयैनं हरिश्रेष्ठ दत्तमस्मै मयाभयं ।
17cd विभीषणाय सुग्रीव यदिवा रावणः स्वयं ॥१५॥
18ab रामेणाथाभये दत्ते स ततो रावणानुजः ।
18cd आहूतो हरिराजेन खात् पपात सहानुगः ॥१६॥
19ab स समेत्य हरिश्रेष्ठः संश्लिष्य च विभीषणं ।
19cd सान्त्वयित्वा च मेधावी दर्शयामास राघवं ॥१७॥
खात् पतित्वावनिं हृष्टो भक्तैरनुचरैः सह ।
आयुधानि च सर्वाणि वृक्षेष्वासज्य केषुचित् ॥१८॥
20ab रूपमन्यच्छुभं चक्रे तैरेवानुचरैः सह ।
स तु रामस्य धर्मात्मा पादयोर्निपपात ह ॥१९॥

९३ = XCI.

इत्युक्तवति सुग्रीवे तदा हरिगणेश्वरे ।
उवाच रामो धर्मात्मा धर्मार्थसहितं वचः ॥ १ ॥
सदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ।
सूक्ष्ममप्यहितं कर्तुं मम शक्तः प्लवङ्गम ॥ २ ॥
पृथिव्यां राक्षसान् सर्वान् पिशाचांश्च सदानवान् ।
शक्तोऽहं सहसा हन्तुं दिव्येनास्त्रबलेन च ॥ ३ ॥
श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ ४ ॥
स तावत् प्रतिजग्राह खगो भार्यानिसूदनं ।
कपोतो वानरश्रेष्ठ किमुताहं विभीषणं ॥ ५ ॥
रावणभ्रातरं दीनं सर्वथा धर्ममाश्रितं ।
आगतं राक्षसैः सार्द्धं सहैभिर्वानरेश्वर ॥ ६ ॥
कन्नस्यर्षेस्त्वनुजेन कण्डुना परमर्षिणा ।
शृणु गाथाश्चिरोद्गीता धर्मिष्ठाः सत्यवादिना ॥ ७ ॥
बद्धाञ्जलिपुटं दीनं याचन्तमपराधिनं ।
हन्यमानमरिं दृष्ट्वा रिपुणा शरणागतं ॥ ८ ॥
आर्त्तो वा यदि वा त्रस्तः परेषां शरणागतः ।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥ ९ ॥

10ab स चेद्भयाद्वा कामाद्वा मोहाद्वा तं न रक्षति ।
10cd समुद्विग्नं यथाशक्ति स पापो लोकगर्हितः ॥१०॥
11ab विनष्टः पश्यतस्तस्य रक्षितुः शरणागतः ।
11cd आदाय सुकृतं तस्मात् सर्वं गच्छत्यरक्षितः ॥११॥
12ab एष दोषो महांस्तात प्रपन्नानामरक्षणे ।
12cd अस्वर्ग्यश्चायशस्यश्च बलवीर्यविनाशनः ॥१२॥
14ab करिष्यामि यथावत् तत् कण्डोर्वचनमुत्तमं ।
14cd धर्मिष्ठं च यशस्यं च स्वर्ग्यं चापि महोदयं ॥१३॥
15ab अभयं सर्वभूतेभ्यो ददामीति हि मे व्रतं ।
15cd संग्रामेऽभिप्रपन्नानां तवास्मीति च वादिनां ॥१४॥
17ab आनयैनं हरिश्रेष्ठ दत्तमस्मै मयाभयं ।
17cd विभीषणाय सुग्रीव यदिवा रावणः स्वयं ॥१५॥
18ab रामेणाथाभये दत्ते स ततो रावणानुजः ।
18cd आक्रान्तो हरिराजेन खात् पपात सहानुगः ॥१६॥
19ab स समेत्य हरिश्रेष्ठः संश्लिष्य च विभीषणं ।
19cd सान्त्वयित्वा च मेधावी दर्शयामास राघवं ॥१७॥
खात् पतित्वावनिं हृष्टो भक्तैरनुचरैः सह ।
आयुधानि च सर्वाणि वृक्षेष्वासज्य केषुचित् ॥१८॥
20ab नूपमन्यच्छुभं चक्रे तैरेवानुचरैः सह ।
स तु रामस्य धर्मात्मा पादयोर्निपपात ह ॥१९॥

शिरसा चरणान्वेषी चतुर्भिः सह राक्षसैः ।
तं च रामः समुत्थाप्य परिष्वज्य च राक्षसं ॥ २० ॥
उवाच मधुरं वाक्यं सखा मम भवानिति ।
अब्रवीच्च तदा वाक्यमुक्तवाक्यं विभीषणः ॥ २१ ॥
धर्मयुक्तं च युक्तं च आत्मनश्च गुणोदयं ।
अनुजो रावणस्याहं तेन चास्मि विमानितः ॥ २२ ॥
भवन्तं सर्वभूतानां शरण्यं शरणं गतः ।
परित्यक्ता मया लङ्का मित्राणि च धनानि च ॥ २३ ॥
त्वद्गतं चैव मे राज्यं जीवितं च धनानि च ।
रक्षसां च बधे सह्यं लङ्कायाश्च प्रधर्षणे ।
करिष्यामि महाप्राज्ञ नयिष्यामि च वाहिनीं ॥ २४ ॥
स एवमुक्त्वा नरदेवपुत्रं
विभीषणो हर्षमगात् तदानीं ।
तूष्णीं बभूवर्षिकुलप्रसूतो
रामं महात्मानमवेक्षमाणः ॥ २५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणवाक्यं
नाम एकनवतितमः सर्गः ॥

94 = XCII.

1ab इति ब्रुवाण तं रामः परिष्वज्य विभीषणं ।
1cd उवाच लक्ष्मणं वीरः समुद्राज्जलमानय ॥ १ ॥
मध्ये वानरमुख्यानां प्रसादान्मम चैव हि ।
2ab अभिषिच्यस्व लङ्कायामिमं सौम्य विभीषणं ॥ २ ॥
2cd अद्यैव राक्षसेन्द्रत्वे प्रसन्ने मयि लक्ष्मण ।
3ab एवमुक्तस्तु सौमित्रिरभ्यसिञ्चद्विभीषणं ॥ ३ ॥
3cd मध्ये वानरमुख्यानां स्वराज्ये रामशासनात् ।
4ab तं प्रसादं तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः ॥ ४ ॥
4cd प्रचक्रुशुर्महानादान् साधु साध्विति चाब्रुवन् ।
5ab तमथोवाच हनुमान् सुग्रीवश्च विभीषणं ॥ ५ ॥
5cd कथं सागरमक्षोभ्यं तरेम मकरालयं ।
6ab उपायं ब्रूहि नः सौम्य यथा नदनदीपतिं ॥ ६ ॥
6cd उत्तरेम शिवेनेमं ससैन्या वरुणालयं ।
7ab एवमुक्तस्तु धर्मात्मा प्रत्युवाच विभीषणः ॥ ७ ॥
7cd समुद्रं शरणं राजा राघवो गन्तुमर्हति ।
8ab खानितः सगरेणायमप्रमेयो महार्णवः ॥ ८ ॥
8cd कर्तुमर्हति रामस्य ज्ञातिसह्यं महोदधिः ।
इति मे वर्तते बुद्धिः दृष्ट्वा रामबलं महत् ॥ ९ ॥

सगरः स हि रामस्य श्रूयत प्रपितामहः ।
ध्रुवमौदार्यमालम्ब्य ज्ञातिसह्यं करिष्यति ॥ १० ॥
एतद्विभीषणेनोक्तं राक्षसेन विपश्चिता ।
प्रकृत्या धर्मशीलस्य राघवस्य व्यरोचत ॥ ११ ॥
स लक्ष्मणं महातेजाः सुग्रीवं च हरीश्वरं ।
सत्क्रियार्थं क्रियादक्षः स्मितपूर्वमभाषत ॥ १२ ॥
विभीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते ।
ब्रूहि तावच्च सुग्रीव तवापि यदि रोचते ॥ १३ ॥
बुद्धिमान् पण्डितो नित्यं भवान् मन्त्रविचक्षणः ।
उभयोः संप्रधार्यार्थं रोचते यत् तदुच्यतां ॥ १४ ॥
एवमुक्तौ तु तौ वीरौ तदा सुग्रीवलक्ष्मणौ ।
समुदाचारसंयुक्तमिदं वाक्यमरोचतां ॥ १५ ॥
अबद्ध्वा सागरे सेतुं घोरेऽस्मिन् वरुणालये ।
शक्यापादयितुं लङ्का सेन्द्रैर्नापि सुरेश्वरैः ॥ १६ ॥
युक्तायुक्तमिदं सौम्य विभीषणवचः कुरु ।
अलं कालात्ययं कृत्वा समुद्रोऽयं नियुज्यतां ॥ १७ ॥
किमर्थं ते नरव्याघ्र नैतद्रोचिष्यते वचः ।
विभीषणेरितं सौम्य कालेऽस्मिंश्च विशेषतः ॥ १८ ॥
इत्यास्तीर्य कुशान् नक्तं तीरे नदनदीपतेः ।
संविवेश तदा रामो वेद्यामिव हुताशनः ॥ १९ ॥

परेण युक्तस्तपसा नरेश्वरः
21|ab परेण वीर्येण च शत्रुकर्षणः ।
कृत्वा मतिं सागरदर्शने तदा
21|cd बभूव तूष्णीं नियतः स पार्थिवः ॥२०॥

इत्यार्षे रामायणे सुन्दरकाण्डे समुद्रोपवेशो
नाम द्विनवतितमः सर्गः ॥

९५ = XCIII.

तस्य रामस्य सुप्तस्य कुशास्तीर्णे मही‍तले ।
नियतस्याप्रमेयस्य निशास्तिस्रस्तदा ययुः ॥ १ ॥
न च दर्शयत्यात्मानं तदा रामं महार्णवः ।
प्रयतेनापि रामेण यथार्हं प्रतिपूजितः ॥ २ ॥
समुद्रस्य ततः क्रुद्धो रामः संरक्तलोचनः ।
समीपे लक्ष्मणं दृष्ट्वा सरोषं वाक्यमब्रवीत् ॥ ३ ॥
पश्य तावदनार्यस्य पूज्यमानस्य लक्ष्मण ।
अवलेपं समुद्रस्य न दर्शयति मां स्वयं ॥ ४ ॥
प्रशमश्च क्षमा चैव मार्दवं प्रियवादिता ।
असामर्थ्यफला ह्येते निर्गुणेषु सदा गुणाः ॥ ५ ॥
आत्मप्रशंसिनं क्रूरं धृष्टं चापरिभाषणं ।
सर्वथोद्यतदण्डं च लोकः सत्कुरुते नरं ॥ ६ ॥
न साम्ना शक्यते कीर्त्तिर्न साम्ना शक्यते यशः ।
प्राप्तुं लक्ष्मण लोकेऽस्मिन् जयो वा रणमूर्द्धनि ॥ ७ ॥
क्षमया हि समायुक्तं मामयं वरुणालयः । —
असमर्थं विजानाति धिक् क्षमामीदृशे जने ॥ ८ ॥
चापमानय मे क्षिप्रं शरांश्चाशीविषोपमान् ।
अद्याक्षोभ्यमिमं क्रुद्धः क्षोभयिष्यामि सागरं ॥ ९ ॥

10ab तलासंस्पर्शमर्यादं सहस्रोर्मिसमाकुलं ।
10cd निर्मर्यादं करिष्यामि शायकैः पश्य सागरं ॥१०॥
11ab अद्य महाबाणनिर्भिन्नैर्मकरैर्मकरालयं ।
11cd निरुद्धतोयं सौमित्रे प्लवद्भिः पश्य सर्वतः ॥११॥
12ab भोगिनां पश्य नागानां मया छिन्नानि लक्ष्मण ।
12cd सुमहान्ति च गात्राणि प्लवमानानि सागरे ॥१२॥
13ab सशङ्खशुक्तिकाजालं समीनमकरं शरैः ।
13cd इमं क्रोधेन महता समुद्रं शोषयाम्यहं ॥१३॥
14ab एवमुक्त्वा ततो रामः प्रगृह्य सशरं धनुः ।
14cd दिव्यं लक्ष्मणहस्तस्थं चक्रे सज्यमनन्तरं ॥१४॥
15cd ततो बाणधनुष्पाणिः क्रोधविस्फारितेक्षणः ।
15ef बभूव रामो दुर्धर्षो युगान्ताग्निरिवोज्ज्वलन् ॥१५॥
15ab नामयित्वा महच्चापं कम्पयन्निव मेदिनीं ।
16cd मुमोच निशितान् बाणान् वज्राणीव शतक्रतुः ॥१६॥
17ab ते ज्वलन्तो महाबाणास्तेजसा पावकोपमाः ।
17cd विविशुः सागरस्याशु सलिलं त्रस्तपन्नगं ॥१७॥
18ab ततो वेगः समुद्रस्य सनक्रमकरो महान् ।
18cd संबभूव महाघोषः स मार्गणकृतस्तदा ॥१८॥
21cd ऊर्मयः सिन्धुराजस्य सनक्रमकरास्तदा ।
21ef विन्ध्यपर्वतसंकाशाः समुत्पेतुः सहस्रशः ॥१९॥

महोर्मिजालावततः शङ्खजालसमावृतः ।
स धूमपरिवृत्तोर्मिः संचचाल महोदधिः ॥ २० ॥
व्यथिताः पन्नगाश्चासन् दीप्तास्या दीप्तलोचनाः ।
दानवाश्च महाकायाः पातालतलवासिनः ॥ २१ ॥
पीड्यमानास्तु ते सर्वे समुद्रं शरणं ययुः ।
स तानाश्वासयामास सर्वानेव सरित्पतिः ॥ २२ ॥
पराक्रमं तस्य ततोऽन्ववेक्ष्य
सरित्पतिर्लोकपतेः सुतस्य ।
महच्च कार्यं समुपस्थितं महान्
प्रदर्शयामास तदात्मनस्तनुः ॥ २३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे शरदाहो नाम
त्रिनवतितमः सर्गः ॥

96 = XCIV.

ततः समीपे रामस्य स्वान् महोर्मीन् विधूय सः ।
17ef पन्नगैः सह दीप्तास्यैः समुद्रः प्रत्यदृश्यत ॥ १ ॥
18ab स्निग्धवैदूर्यसंकाशो जाम्बूनदविभूषितः ।
18cd रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः ॥ २ ॥
20ab स राममभिगम्याशु सचिवैः सह सागरः ।
21ab अब्रवीत् प्रसृतं वाक्यं प्राञ्जलिर्मधुरं तदा ॥ ३ ॥
स राममथ रामेति पूर्वमामन्त्र्य वीर्यवान् ।
अब्रवीच्च ततो वाक्यं पद्मपत्रनिभेक्षणः ॥ ४ ॥
23ab पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं ।
23cd स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः ॥ ५ ॥
23ef तत् स्वभावो ममाप्येष यदगाधोऽहमव्ययः ।
25cd विकारस्तु भवेद्गाध इति तत् ते वदाम्यहं ॥ ६ ॥
27ab सगरो नाम पूर्वस्ते मम कर्ता महाद्युतिः ।
तस्याहं नामतः ख्यातः सागरः सरितां पतिः ॥ ७ ॥
28ab स्तम्भयेतज्जलं राम दद्यां ते मार्गमुत्तमं ।
28cd गच्छेयुर्येन हरयो न च सेतुर्भविष्यति ॥ ८ ॥
29ab आश्चर्यं तु तदा लोके समुद्रे स्थलसंभवः ।
29cd तच्च मे परिहर्तव्यं त्वत्तो राम विशेषतः ॥ ९ ॥

अन्येऽपि बलवन्तो मे दण्डमुद्यम्य राघव ।
गाधत्वं मम मार्गं च दापयिष्यन्ति तेजसा ॥ १० ॥
अद्भुतं हि नृणां लोके दृष्टमन्तकरं भवेत् ।
गाधत्वं वेत्स्यते तेन नैतद्वाच्यं त्वयान्यथा ॥ ११ ॥
न कामान्न च वै लोभान्न भयात् पार्थिवात्मज ।
क्षमो ग्राहाकुलजले दातुं गाधो ममानघ ॥ १२ ॥
एतदुक्तं मया दैवं वक्ष्यामि त्वथ मानुषं ।
उपायं शृणु मे सौम्य येन मां संतरिष्यसि ॥ १३ ॥
अयं राम नलो नाम तनयो विश्वकर्मणः ।
पित्रा दत्तवरः श्रीमांस्तव चापि हिते रतः ॥ १४ ॥
वानरोऽयं नरश्रेष्ठ युज्यतां सेतुकर्मणि ।
एष सेतुं महोत्साहः करोतु मयि वानरः ॥ १५ ॥
तमहं धारयिष्यामि भवतः कार्यगौरवात् ।
ग्राहा न विचरिष्यन्ति न च वास्यति मारुतः ॥ १६ ॥
सलिलं स्तम्भयिष्येऽहं नलस्य तव चाज्ञया ।
इति ब्रुवाणं तं दृष्ट्वा नलो राघवमब्रवीत् ॥ १७ ॥
अहं सेतुं करिष्यामि विस्तीर्णे मकरालये ।
पितुः सामर्थ्यमाश्रित्य तत्त्वमाह महोदधिः ॥ १८ ॥
मम मात्रे वरो दत्तो महेन्द्रे विश्वकर्मणा ।
औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणः ॥ १९ ॥

न तु कुर्यामहंकारं न वदाम्यात्मनो गुणान् ।
सेतुमद्यैव बध्नन्तु कामं वानरपुङ्गवाः ॥ २० ॥
तव पित्रा मम महत् संगतं देवसंसदि ।
पुरा देवासुरे तत्र संग्रामे तारकामये ॥ २१ ॥
तत्र ते व्याहृतं पित्रा सुराणां हितकाम्यया ।
मया चैव महाबाहो तदासौ सखितां गतः ॥ २२ ॥
सख्युर्हि मे स पुत्रस्त्वं पुत्रो मे ह्यसि धर्मतः ।
अवश्यं तव साहाय्यं मया कार्यं विशेषतः ॥ २३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे समुद्रोद्गमो नाम
चतुर्नवतितमः सर्गः ॥

96+97+98 = XCV.

एतच्छ्रुत्वा तु वचनं नलेन समुदाहृतं ।
राममामन्त्र्य चैवाथ समुद्रः प्रविवेश वै ॥ १ ॥
तस्मिन् प्रविष्टे सहसा स्वयोनिं वरुणालयं ।
अथ दाशरथी रामो हृष्टात्मा वाक्यमब्रवीत् ॥ २ ॥
हनूमन्तं च विक्रान्तमङ्गदं च महाबलं ।
सुहृदं वानरश्रेष्ठं जाम्बवन्तं च विस्मितं ॥ ३ ॥
श्रुत्वा भवद्भिर्वचनं समुद्रस्य नलस्य च ।
यदत्रानुविधातव्यं तत् सर्वं संविधीयतां ॥ ४ ॥
एतच्छ्रुत्वा ततो वाक्यं सुग्रीवो वानरेश्वरः ।
त्वरन् वानरसैन्यानि प्रेषयामास सर्वतः ॥ ५ ॥
पर्वतांश्च द्रुमांश्चैव लतागुल्मांस्तथैव च ।
सर्वमानयत क्षिप्रं न विलम्बितुमर्हथ ॥ ६ ॥
इत्युक्तास्ते तु हरयः सुग्रीवेण त्वरान्विताः ।
अभिपेतुस्तदारण्यं हृष्टाः शतसहस्रशः ॥ ७ ॥
ते सालानश्वकर्णांश्च वेणुवेत्राणि वानराः ।
कुटजानर्जुनान् नीपांस्तिलकान् वकुलान् वकान् ॥ ८ ॥
अन्यांश्च वृक्षानादाय गिरीणां शिखराणि च ।
समुद्रसलिले सेतुं चक्रुः शतसहस्रशः ॥ ९ ॥

केचित् पर्वतशृङ्गाणि शिलाश्च कनकोज्ज्वलाः ।
उत्पाद्योत्पाद्य निदधुर्नलहस्ते महौजसः ॥१०॥
ते नगैर्नगरप्रख्यैर्द्रुमैश्च कुसुमोज्ज्वलैः ।
चक्रुः सेतुं समुद्रस्य वानरा वारणोपमाः ॥११॥
94ab+ 95, 19ab+ 38ab दशयोजनविस्तीर्णमायतं शतयोजनं ।
94cd+ 3, 19cd नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ॥१२॥
दशयोजनविस्तारा सा वीथी तत्र सागरे ।
विससारोष्णगे काले महाभ्र इव वायुना ॥१३॥
95ab ततः शाखामृगा वृक्षान् पुष्पितान् विहगायुतान् ।
95cd समूलांस्तूर्णमुत्पाद्य चिक्षिपुर्लवणाम्भसि ॥१४॥
96ab तानि पर्वतशृङ्गाणि तृणकाष्ठानि चैव हि ।
96cd समुद्रे क्षिप्यमाणानि न विषेदुः कथञ्चन ॥१५॥
ते नगान् नगसंकाशान् शाखाः शाखामृगर्षभाः ।
बभञ्जुर्बहवस्तत्र समुद्रे चापि चिक्षिपुः ॥१६॥
105ab गुल्मैः शलभसंतानैस्तथा वेत्रलताचयैः ।
105cd सेतुं बबन्धुः कीर्णेषु वृक्षेषु च महाबलाः ॥१७॥
106ab नवमेघनिकाशैश्च नगैः परमपुष्पितैः ।
106cd तैः सपत्रैः समूलैश्च नलः सेतुं बबन्ध तं ॥१८॥
अन्ये तु सकृदादाय गिरीणां शिखराणि च ।
सागरस्य जले चक्रुः सेतुं शतसहस्रशः ॥१९॥

बलिभिर्वेगिभिर्वेगात् कपिभिस्तीरजा द्रुमाः ।
कम्पिताः पातिताश्चैव समुद्रे सरितां पतौ ॥ २० ॥
शिलानां क्रियमाणानां शिखराणां च भिद्यतां ।
बभूव तुमुलः शब्दस्तदा तस्मिन् महार्णवे ॥ २१ ॥
उन्मत्तभूतः क्षुभितो विघूर्णित इवोदधिः ।
कुर्वद्भिस्त्वरितं सेतुं वानरैस्तैः सहस्रशः ॥ २२ ॥
हस्तिप्राणा महावेगाः कपयः कामरूपिणः ।
पर्वतानानयन्ति स्म नखैः परिलिखन्ति च ॥ २३ ॥
सुग्रीवस्त्वपि शृङ्गाणि गिरीणां मेघसंनिभः ।
आरुह्यारुह्य चिक्षेप शतशोऽथ सहस्रशः ॥ २४ ॥
दर्दुरस्याङ्गदः शृङ्गं श्रीमानारुह्य पाणिना ।
लवणाम्भसि चिक्षेप सविद्युतमिवाम्बुदं ॥ २५ ॥
सचन्दनवनं शृङ्गं सर्वतः पुष्पितं महत् ।
आरुह्य प्रहृतः शीघ्रं मैन्दो द्विविद एव च ॥ २६ ॥
गिरीणां भिद्यमानानां वानरैः सेतुकर्मणि ।
भुवि दिव्यन्तरीक्षे च शुश्रुवे निनदो महान् ॥ २७ ॥
तेन वित्रासिताः सर्वे मृगपक्षिगणा वने ।
अशक्नुवन्तः पतितुं शिखरेषु व्यशेरत ॥ २८ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
आवृत्य गगनं तस्थुर्द्रष्टुकामास्तदद्भुतं ॥ २९ ॥

2ab ऋषयः पितरो यक्षाः राजर्षिगरुडोरगाः ।
2cd आजग्मुः प्रेक्षितुं सेतुं बध्यमानं महार्णवे ॥ ३० ॥
4ab अविदूराच्च रामस्य सर्वे वियति विष्ठिताः ।
4cd राघवं पूजयां चक्रुरूचुश्च मधुरा गिरः ॥ ३१ ॥
7ab चकार न पुरा कश्चिन्न च कर्ता करिष्यति ।
7cd उपादाय सुरान् सेन्द्रानिदमन्यत्र राघवात् ॥ ३२ ॥
8ab ये राममेवं द्रक्ष्यन्ति समुत्पादितपौरुषं ।
8cd कारयन्तमिमं सेतुं समुद्रे सरितां पतौ ॥ ३३ ॥
9ab तेषां पुत्रा भविष्यन्ति वीर्यवन्तो यशस्विनः ।
9cd आहर्त्तारः परार्द्धस्य रत्नस्य द्रविणस्य च ॥ ३४ ॥
10ab यावत् समुद्रस्तावच्च सेतुरेवं धरिष्यति ।
10cd यावच्च सागरे कीर्त्तिस्तावद्रामे भविष्यति ॥ ३५ ॥
11ab कः समुद्रस्य बध्नाति सेतुमित्येव चारणाः ।
11cd विद्याधराश्च मुदिताः पप्रच्छुस्तूर्णमाययुः ॥ ३६ ॥
12ab रामः सेतुं समुद्रस्य बध्नातीति दिशो दश ।
12cd जगाम शब्दस्तुमुलः पृथिव्यामपि शुश्रुवे ॥ ३७ ॥
16ab आन्तांस्तु न तपेत् सूर्यः कथञ्चिद्वानरानपि ।
16cd अभ्राणि जज्ञिरे दिग्भ्यश् छादयित्वा रवेः प्रभां ॥ ३८ ॥
17ab प्रववर्ष च पर्जन्यो मारुतश्च शिवो ववौ ।
17cd वृक्षेभ्यश्च तदा जज्ञे कपिभक्ष्योपमं मधु ॥ ३९ ॥

समुद्रवरदानाच्च संविधानाच्च कर्मणां ।
सेतुः स्वल्पेन कालेन निष्ठां प्राप्तोऽभवत् तदा ॥ ४० ॥
कूले तूत्तर आरब्धो लङ्काकूले प्रतिष्ठितः ।
सागरस्यैष सीमन्तश्चित्ररूपो व्यदृश्यत ॥ ४१ ॥
विशालः सुकृतः श्रीमान् सर्वभूतसमाह्वितः ।
अशोभत ततः सेतुः सीमन्त इव सागरे ॥ ४२ ॥
ददृशुः सर्वभूतानि सागरे सेतुबन्धनं ।
तानि कोटीसहस्राणि वानराणां महात्मनां ॥ ४३ ॥
बन्धनादेव सेतोस्तु जग्मुर्मासेन सागरं ।
निष्पाद्य हरयः सेतुं प्रतीताः सन्तुरर्णवं ॥ ४४ ॥
आश्वास्य च तदा सर्वे स्वेषु सैन्येषु रेमिरे ।
पारे तस्य समुद्रस्य गदापाणिर्विभीषणः ।
परेषां प्रतिघातार्थमातिष्ठत् सह बान्धवैः ॥ ४५ ॥

इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्र्यां संहितायाम् सुन्दरकाण्डे
सेतुबन्धनं नाम पञ्चनवतितमः सर्गः ॥

सुन्दरकाण्डं समाप्तं ॥

# ANNOTAZIONI

## AL TESTO DEL LIBRO QUARTO.

---

Capitolo XXXVII, sloco 2, verso 2. Il codice manoscritto W ha questo verso così : मन्दारपाण्डगिरिषु पञ्चशैलेषु ये स्थिताः, e commenta in questo modo : पाण्ड्यदेशगिरिषु पाण्ड्यदेशपूज्येषु पञ्चसु शैलेषु, pigliando il vocabolo गिरि nel significato di पूज्य *degno di venerazione;* ma nè la lezione del codice W, nè la chiosa ch' egli vi fa, non mi soddisfanno : ho preferito la lezione del codice G. Quanto al vocabolo मन्दार, il commentatore non dice nulla; forse converrebbe leggere मन्दर.

Capitolo XXXVIII, sloco 55, verso 2. मध्यैरन्तैश्च. Il commentatore Lokanâtha chiosa : मध्यैर् मध्यदेशस्थैर् अन्तैर् देशप्रान्तस्थैर्.

Capitolo XL, sloco 25, verso 2. Invece di दण्डकूलांश्च, il codice G ha पद्मकूलांश्च, il codice M अन्कलांश्चापि; Lokanâtha arreca nel commento un' altra lezione, दण्डकुशान्, contentandosi di dire che è un luogo così chiamato देशविशेषः. — Sloco 30, verso 1. Invece di अजया बलवन्तश्च, il codice W ha अप्रवमालपनष्टाश्च, il codice M अजमा बलवन्तश्च. — Sloco 50, verso 1. In luogo di हरिभूतं, il codice G ha हविर्भूतं, il codice M हयो भूत्वा. — Sloco 54, verso 2. Invece di निर्माणं, il codice W ha nel testo निर्याणं, ma arreca nel commento anche la lezione निर्माणं.

Capitolo XLI, sloco 13, verso 2. Invece di बाह्दां, il codice W ha वरदां. — Sloco 14, verso 2. Invece di अन्तर्वेदींश्च

विमलान्, il codice w ha आम्रावतीमवन्तीं च. — Sloco 17, verso 1. Il codice G ha questo verso come segue : तथाऽवकर्णालिङ्गांश्च वनानि च विशेषतः.

Capitolo XLIII, sloco 5, verso 2. Invece di विशालानि पुराणि च, il codice G ha तथा सूर्पारकानपि, il codice w तथा सूर्याकरानपि, e commenta così : सूर्याकरो देशविशेषः यद्वा सूर्या उषधिविशेषः तदाकरान्. — Sloco 8, verso 2. In luogo di कोलूकमेव च, il codice G legge शैलूतमेव च; il codice w arreca nel commento anche un' altra lezione, कोलूतमेव च. — Sloco 14, verso 1. In luogo di स वै फेनगिरिं, il codice G ha स वै फलगिरिं, il codice M महाहिमगिरिं. — Sloco 20. Il codice G ha questo sloco così : स्त्रीलोका पह्लवस्थानं दण्डामित्रामरुन्धतीं । पुरंश्चैव वनानां च विचिनुध्वं वनौकसः. — Sloco 23, verso 2. Invece di अपरानपि शाल्वादीन्, il codice w ha अनन्तपिङ्गलान् पिङ्गान्. — Dopo lo sloco 36 il codice w ha lo sloco seguente : तत्र प्राग्ज्योतिषं नाम शातक्रुम्भमयं पुरं । तस्मिन् वसति दुष्टात्मा नरको नाम दानवः. Ho omesso questi due versi, perchè quì si parla delle regioni occidentali, e la città Prâggyotisa si trova ad oriente : questo sloco è quì evidentemente fuori di luogo.

Capitolo XLIV, sloco 12, verso 2. In luogo di प्रचरान्, il codice G ha प्रस्तरान्, il codice M विशालान्. — Sloco 13, verso 2. Invece di वाह्लीकान्, il codice w ha रात्तीकान्. — Sloco 20, verso 1. In luogo di टङ्कणान्, il codice G ha तङ्गनान्; invece di पशुपालान्, il codice w ha पांशपालान्. — Sloco 21, verso 2. Il codice G ha questo verso così : गत्वा चैत्रवनं नाम महासत्त्वं शिलोच्चयं. — Sloco 23, verso 1. In luogo di ताम्राकरम्, il codice G ha आम्रातकम्.

FINE DEL VOLUME QUARTO.

## सर्गसंग्रहपत्रं

### किष्किन्ध्याकाण्डं

## सुन्दरकाण्डं

---

# शुद्धिपत्रं

| पृष्ठं | पङ्क्तिः | दूषितं | शुद्धं |
|---|---|---|---|
| १५ | ११ | मघपर्वत | मेघपर्वत |
| ४१ | १० | तिर्मितो | निर्मितो |
| ५२ | १७ | रजनाद्वये | रजनीद्वये |
| ५८ | १ | शलो | शैलो |
| ६२ | १४ | ॥६८॥ | ॥८६॥ |
| १०५ | ४ | मथिलीं | मैथिलीं |
| २७५ | १२ | लालसं | लालसां |
| ३५४ | २ | ॥२॥ | ॥१॥ |
| ३५५ | २० | ॥१२॥ | ॥१९॥ |
| ३५७ | ६ | ॥३३॥ | ॥३२॥ |
| ३६६ | २ | ॥१९॥ | ॥१०॥ |
| ३९१ | ५ | शोचत | शोचते |
| ४१७ | १ | प्रमो | प्रभो |
| ४२५ | १८ | वश्यामि | पश्यामि |
| ४२७ | | ४५४ | ४२७ |

| पृष्ठं | पङ्क्तिः | दूषितं | शुद्धं |
|---|---|---|---|
| ४६७ | ११ | परा | पुरा |
| ४८४ | १७ | संविचतव्या | संविचेतव्या |
| ४९१ | ११ | ॥ २५ ॥ | । |
| ४९३ | १८ | त | ते |